सार्थकः । षष्ठ्याः साकाङ्क्षत्वात् । जीववाचित्वे तु पदार्थत्वाव्यभिचारात्स्वशब्देनैवालं, किं भावशब्देनेत्यतो भावशब्दं तावदन्यथा व्याचष्टे ॥ सर्वदेति ॥ यद्यपि भवनकर्ता भावः । तथाऽपि विशेषानुपादाने मुख्यस्य ग्राह्यत्वात्सर्वदेत्यादि सिध्यति । तथाऽपि तस्य किं प्रयोजनमित्यत आह ॥ अन्तःकरणादीति ॥ स्वशब्दमात्रोपादाने तस्याऽत्मीयेऽपि प्रयोगादन्तःकरणादिकमपि प्रसज्येत । तथा च न द्वितीयस्येदमुत्तरं स्यात् । आत्मैव ह्यात्माऽधिकारे प्रतिपाद्यो वक्तव्यो नान्तःकरणादिकम् । अतस्तद्व्यावृत्त्यर्थो भावशब्दः प्रयुक्तः । कथं तेन तद्व्यावृत्तिरित्यत आह ॥ न हीति ॥ "अन्नमयं हि सोम्य मनः" इत्यादेरिति भावः । तथा चान्तःकरणादौ व्यावृत्ते स्वशब्द आत्मार्थतया व्याख्यातो भवतीति हृदयम् । एवं तर्हि भाव इत्येवास्तु किं स्वशब्देनेत्यत आह ॥ स्वशब्द इति ॥ ईश्वरोऽपि हि सर्वदैकप्रकारेणास्त्येव । अतो भाव इत्येवोक्ते तत्प्रसक्तौ पूर्ववद्द्वितीयोत्तरत्वासम्भवे तद्व्यावृत्त्यर्थः स्वशब्दः । न हीश्वरो जीवानां स्वः । भेदप्रमाणविरोधात् । अत एव ईश्वरस्वभावो जीव इति व्याख्यानमपास्तम् ।

नन्वेवमपि स्वशब्दस्याऽत्मीयार्थत्वादीश्वरप्रसक्तिः । मैवम् । द्विष्ठो यद्यपि सम्बन्धः "षष्ठ्युत्पत्तिः प्रधानतः" इति वचनात् । तस्यात्मीयत्वाभावात् । षष्ठ्यन्तात्खल्वयं छः । सकलकार्योत्पत्तिनिमित्तभूतो देवतोद्देशेन च पुरोडाशादिद्रव्यत्यागः तज्जन्यमपूर्वमिति यावदिति व्याख्यानमसत् । तस्याध्यात्मपदेनैव गृहीतत्वादिति भावेन भूतभाव इत्यादिकं व्याख्याति । भूतानामिति ॥ उद्भवकारी च सा ईश्वरक्रिया चेति विग्रहः । ईश्वरक्रियाग्रहणं कर्मशब्देनैकार्थ्यप्रतिपत्त्यर्थम् । एवं लक्षणो यो विसर्गः स कर्मसञ्ज्ञितो न तु कुलालादिसम्बन्धीत्यर्थः । ननु विसर्गशब्दः त्यागार्थः । तत्कथमेवं व्याख्यानमित्यत आह ॥ विशेषेणेति ॥ १ ॥ २ ॥ ३ ॥

भ० गी०—

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥

भा०—

भूतानि सशरीरान् जीवानधिकृत्य यत्तदधिभूतम् । क्षरो भावो विनाशी कार्यपदार्थः । अव्यक्तान्तर्भावेऽपि[1] तस्याप्यन्यथाभावाख्यो विनाशोऽस्त्येव । तच्चोक्तम्—

"अव्यक्तं परमे व्योम्नि[2] निष्क्रिये सम्प्रलीयते" ।

इति ।

"तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" ।

इति च । "विकारोऽव्यक्तजन्म हि" इति च स्कान्दे । पुरि शयनात्पुरुषो जीवः । स च सङ्कर्षणो ब्रह्मा वा । स सर्वदेवानधिकृत्य तत्पति[3]रित्यधिदैवतम् । देवाधिकारस्थ इति वा ।

प्र० दी०—

परिहारं सङ्गमयितुमधिभूतशब्दार्थं तावदाह ॥ भूतानीति ॥ अधिकृत्य तदुपकारित्वेन यद्वर्तते । "क्षरः सर्वाणि भूतानि" इति वक्ष्यमाणं क्षरं व्यावर्तयितुं व्याचष्टे ॥ क्षर इति ॥ क्षरशब्दव्याख्या विनाशीति । भावशब्दस्यार्थद्वयं कार्यं इति पदार्थ इति । भवति उत्पद्यत इति भावः । उत्पत्तिमान् पदार्थो नाशवान् पदार्थ इति प्रत्येकमुत्तरम् । सर्वभूतानामध्यात्मत्वान्न ग्रहणम् । नन्वव्यक्तमपि सशरीरान् जीवानधिकृत्य वर्तत इति तस्याप्यधिभूतेऽन्तर्भावोऽस्त्येव । न चैतद्विनाशि कार्यं वा । नासत इत्युक्तत्वात् । ततोऽव्यापकमुत्तरमित्यत आह ॥ अव्यक्तेति ॥ अव्यक्तस्याऽधिभूतान्तर्भावेऽपि नाव्यापकमुत्तरमिति शेषः । कुत इत्यत आह ॥ तस्यापीति ॥

1. अ. अपिशब्दो न दृश्यते 2. अ. व्योमन् 3. अ. पतिः

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अन्यथाभावो वैषम्यपरित्यागेन साम्यावस्थापत्तिः। यत इति शेषः। तथा विक्रियालक्षणं जन्म चेत्यपि ग्राह्यम्। उभयत्र क्रमेण प्रमाणान्याह॥ तच्चेति॥ व्योम्नि व्याप्ते। प्रलये प्रचुरव्यापाराभावान्निष्क्रिये। ननु पुरुषः परमात्मा। स ब्रह्माधियज्ञशब्दाभ्यां उक्त इत्यत आह॥ पुरीति॥ शरीरे। 'अधिकरणे शेतेः' इति डः "वर्णागमो वर्णविपर्ययश्च" इत्यादिना साधुः। तथाऽप्यध्यात्मशब्देन गतार्थतेत्यत आह॥ स चेति॥ सर्वजीवाभिमानित्वादिति भावः। तस्याधिदैवत्वं कथमित्यतो द्वेधाऽऽह॥ स इति॥ अधिकृत्य वर्तते इत्यस्यैव[1] विवरणं पतिरिति। देवाधिकारस्थः तत्प्रकरणेषु मुख्यतः प्रतिपाद्यः। सर्वदेवतासङ्ग्रहार्थं वा द्वितीयं व्याख्यानम्। अक्षरार्थस्तु पूर्ववत्।

भा०—

सर्वयज्ञभोक्तृत्वादेरधियज्ञः। अन्योऽधियज्ञोऽग्न्यादिः प्रसिद्ध इति "देहे" इति विशेषणम्। "भोक्तारं यज्ञतपसाम्", "त्रैविद्या माम्"। "ये त्वन्यदेवताभक्ताः"। "एतस्य वा अक्षरस्य प्रशासने गार्गि"। "ददतो मनुष्याः प्रशंसन्ति यजमानं देवाः" इत्यादेः।

"कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैश्रयसं पदं[2]"।

इत्यादिपरिहाराच्च मोक्षधर्मे। भगवान् चेत्तद्भोक्तृत्वादेरधियज्ञत्वं सिद्धमिति कथमित्यस्य परिहारः पृथङ् नोक्तः। सर्वप्राणिदेहस्थरूपेण स अधियज्ञः।

प्र० दी०—

अधियज्ञः कथमित्यस्योत्तरं भगवताऽनुक्तं भाष्यकृदाह॥ सर्वेति॥ आदिपदेन तत्प्रवर्तकत्वादि। नाध्यात्मशब्दवदधियज्ञशब्देऽव्ययीभावः। किन्त्वधिगतो यज्ञमिति प्रादिसमासः। अधिष्ठितो

1. क. एवशब्दो न दृश्यते 2. अ. परम्

यज्ञोऽनेनेति बहुव्रीहिर्वा। अधियज्ञः क इति प्रश्ने तत्परिहारे च देह इत्यस्य प्रयोजनमाह ॥ अन्य इति ॥ अन्यो भगवत इति सिद्धार्थता-परिहारार्थं प्रश्नवाक्ये देह इति विशेषणं प्रयुक्तम्। कर्तृभोक्तृफल-दातॄणां देहप्रेरकत्वेन[1] वर्तमान इति। अतः परिहारवाक्येऽपि यथाप्रश्नं तदुपात्तमिति वाक्यशेषः। भगवतः सर्वयज्ञभोक्तृत्वं कुतो, येनै-वमुत्तरमध्याह्रियत इत्यत आह ॥ भोक्तारमिति ॥ त्रैविद्यानुष्ठितयज्ञ-भोक्तृत्वाभावात् "सर्व" इत्यनुपपन्नमित्यत आह ॥ त्रैविद्या इति ॥ प्रवर्तकत्वे श्रुतिमाह ॥ एतस्येति ॥ यज्ञफलदातृत्वादौ प्रमाणमाह ॥ कुतो हीति ॥ ध्रुवः चिरन्तनः। नैश्रेयसं मुक्तौ भवं पदं सुखं इत्यादेः प्रश्नस्य। नन्वेष परिहारो भगवतैव कुतो नोक्त इत्यत आह ॥ भगवान् चेदिति ॥ चेच्छब्दः यदाशब्दार्थे। अधियज्ञोऽहमिति यदाऽधि-यज्ञत्वेन भगवानुक्तः तदा तस्य सर्वयज्ञभोक्तृत्वादेरधियज्ञत्वमर्जुनस्य सिद्धमेव। "भोक्तारं" इत्यादेरर्थस्य तेन श्रुतत्वात्। अन्यत्वपक्ष एव कथमिति पृष्टत्वात्। एवमालोच्य भगवता "कथं" इत्यस्य प्रश्नस्य परिहारो "अधियज्ञोऽहं" इत्यतः पृथङ् नोक्तः। अस्माभिस्तु मन्दान् बोधयितुमुक्त इति भावः। ननु यद्यधियज्ञः स्वयमेव, कथं तर्हि "साधियज्ञं मां" इति प्रागवोचदित्यत आह ॥ सर्वेति ॥ रूपविशेषापेक्षया साहित्यमुक्तमिति भावः। अनेन परिहारवाक्यस्थस्य "देहे" इति विशेषणस्य प्रयोजनान्तरं चोक्तं भवति।

भा०—

"अत्र" इति स्वदेहनिवृत्त्यर्थम्। न हि तत्रेश्वरस्य नियन्तृत्वं पृथगस्ति। नात्रोक्तं ब्रह्म भगवतोऽन्यत्। "ते ब्रह्म" इत्युक्त्वा "साधिभूताधिदैवं मां साधियज्ञं च ये विदुः" इति परामर्शात्। तस्यैव च प्रश्नात्। "साधियज्ञं" इति भेदप्रतीतेः तन्निवृत्त्यर्थं "अधियज्ञोऽहं" इत्युक्तम्। "मां" इत्यभेदप्रसिद्धेः[2] "अक्षरं" इत्येवोक्तम्। आह च गीताकल्पे[3]—

1. क. देहप्रवर्तकत्वेन 2. अ. अभेदप्रतीतेः 3. अ. कल्पे

*

"देहस्थविष्णुरूपाणि अधियज्ञ इतीरितः ।
कर्मेश्वरस्य सृष्टयर्थं[1] तच्चापीच्छाद्यमुच्यते ॥
अधिभूतं जडं प्रोक्तमध्यात्मं जीव उच्यते ।
हिरण्यगर्भोऽधिदैवं देवः सङ्कर्षणोऽपि वा ॥
ब्रह्म नारायणो देवः सर्वदेवेश्वरेश्वरः" । इति ।
"यथा प्रतीतं वा सर्वमत्र नैव[2] विरुध्यते" ॥

इति । स्कान्दे च—

"आत्माभिमानाधिकारस्थितमध्यात्ममुच्यते ।
देहाद्बाह्यं विनाऽतीवबाह्यत्वादधिदैवतम् ॥
देवाधिकारगं सर्वं महाभूताधिकारगम् ।
तत्कारणं तथा कार्यमधिभूतं तदन्तिकात्" ॥

इति । महाकौर्मे च—

"अध्यात्मं देहपर्यन्तं केवलात्मोपकारकम् ।
सदेहजीवभूतानि यत्तेषामुपकारकृत् ॥
अधिभूतं तु मायान्तं देवानामधिदैवतम् ॥"

इति ॥ ४ ॥

प्र० दी०—

"अत्र" इति देहविशेषणं किमर्थमित्यत आह ॥ अत्रेति ॥ इह लौकिके देह इत्यर्थः । कुत ईश्वरदेहो व्यावर्तनीय इत्यत आह ॥ न हीति ॥ तत्र स्वदेहे । पृथक् पृथग्भावेन । यथा "अधियज्ञोऽहमेव" इत्युक्तं न तथा "ब्रह्माहं" इति । अतो भगवतोऽन्यदेवेदम् । "ब्रह्म परमं" इति तु स्वरूपकथनम् । न तु विशेषणमिति शङ्कां निवारयति ॥ नात्रेति ॥ पूर्वाध्याये "ते ब्रह्म तद्विदुः" इत्युक्त्वा कथम्भूतं ब्रह्म इत्याकाङ्क्षायां "साधिभूताधिदैवं साधियज्ञं च ब्रह्म" इति वक्तव्ये "मां" इति ब्रह्मणः परामर्शात् । तत्रास्तु भगवानेव

1. अ. सृष्ट्याख्यम् 2. अ. वै न

ब्रह्म। अत्र तु कुत इत्यत आह॥ तस्यैवेति॥ पृष्टस्यैव वक्तव्यत्वात्। तर्ह्यधियज्ञस्य ब्रह्मणश्च भगवत्त्वादेकत्राहमेवेत्युक्तिरपरत्र तदनुक्तिः किन्निबन्धनेत्यत आह॥ साधियज्ञमिति॥ शेषं तात्पर्यनिर्णये। एतेनाऽपव्याख्यानमपि निरस्तम्। द्वादशादौ च विस्तरेण। आगमसम्मत्योक्तं स्थापयति॥ आह चेति॥ यानि देहस्थविष्णुरूपाणि सः अधियज्ञ इतीरितः। तदपीच्छाप्रयत्नाद्यमेव। न तु परिणामरूपम्। जडं देहाद्बाह्यम्। न केवलमेषां पदानामेतावन्मात्रार्थत्वं किं तु यथाप्रतीतं प्रतीतिमनतिक्रम्य शब्दशक्त्या यावत्प्रतीतं प्रमाणाविरुद्धं च तदत्र व्याख्यायमानं वक्तुरभिप्रायं न व्यभिचरतीत्यर्थः। किञ्चिद्व्यवहितत्वान्मध्येऽपीतिशब्दः। एतदेव वाक्यान्तरेण स्पष्टयति॥ स्कान्दे चेति॥ आत्मनोऽभिमानस्य विषयः। आत्माधिकारस्थं तत्र प्रतिपाद्यम्। देहाद्बाह्यं विनेति सामर्थ्यादात्माभिमानस्थेन सम्बध्यते। तत्र युक्तिरतीव बाह्यत्वादत्यभिमानविषयत्वाभावात्। महाभूताधिकारगं महाभूतम्। कार्यकारणग्रहणहेतुः। तदन्तिकात् तत्तादात्म्यात्। देवानामुपकारकृत्॥४॥

भ० गी०—

अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम्।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥५॥

भा०—

मद्भावं मयि सत्ताम्[1]। निर्दुःखनिरतिशयानन्दात्मिकाम्[2]। तच्चोक्तम्—

"मुक्तानां च गतिर्ब्रह्मन् क्षेत्रज्ञ इति कल्पितः"।

इति मोक्षधर्मे॥५॥

1. अ. मद्भद्भावम्
2. अ. निर्दुःखनिरतिशयानन्दात्मकम्

प्र० दी०—

"मद्भावं" इत्यस्य मदात्मकत्वं इत्यन्यथाप्रतीतिनिरासायाऽह ॥ मद्भावमिति ॥ ननु भगवति स्थितिः सर्वदाऽस्ति । सा कथं फलमित्यतो विशिनष्टि ॥ निर्दुःखेति ॥ क्वचित्पाठो मद्भावं मद्भद्भावं इति । तत्र भगवत्प्रतिबिम्बानां जीवानां तत्साहश्यं सदाऽस्ति । तत्कथं प्राप्यमुच्यत इत्यत उक्तम् ॥ निर्दुःखेति ॥ अत्राऽत्मकमिति पाठः । अभिव्यक्तमिति शेषः । प्रतीत एवार्थः किं न स्यादिति चेन्न । मुक्तानां भगवदाश्रितत्वेन तद्भावायोगात् । तदपि कुत इत्यत आह ॥ तच्चेति ॥ क्षेत्रज्ञः परमात्मा गतिरिति समर्थितः ॥ ५ ॥

भ० गी०—

यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः[1] ॥ ७ ॥

भा०—

स्मरन् पुरुषः[2] त्यजतीति भिन्नकालीनत्वेऽप्यविरोध इति मन्दमतेः शङ्का मा भूदित्यन्त इति विशेषणम् । सुमतेः नैव शङ्काऽवकाशः । स्मरन् त्यजतीत्येककालीनत्वप्रतीतेः । दुर्मतेः दुःखान्न स्मरन् त्यजतीति शङ्का ।

"त्यजन् देहं न कश्चित्तु मोहमाप्नोत्यसंशयम्" ।

इति स्कान्दे ।

"तस्य ह एतस्य हृदयस्याग्रं प्रद्योतते ।
तेन प्रद्योतनेन एष आत्मा निष्क्रामति" ॥

---

1. अ. असंशयम् 2. अ. पुरुष इति पाठः

इति हि श्रुतिः । सदा तद्भावभावित इत्यन्तकालस्मरणोपायमाह । भावोन्तर्गतं मनः । तथाऽभिधानात् । भावितत्वमतिवासितत्वम् । "भावना त्वतिवासना" इत्यभिधानात् ॥ ६ ॥ ७ ॥

प्र० दी०—

नन्वु कलेवरत्यागस्यान्ताव्यभिचारात् "अन्त" इति व्यर्थमित्यत आह ॥ स्मरन् इति ॥ न "अन्ते" इत्येतत् "कलेवरं त्यजति" इत्यस्य विशेषणम् । येन व्यर्थं स्यात् । किन्त्वन्ते स्मरन् इति स्मरणस्यैव । तत्रापि किं प्रयोजनमिति चेदुच्यते । "लक्षणहेत्वोः क्रियायां" इति लक्षणेऽपि शतुर्विधानात् स्मरन् पुरुषः कलेवरं त्यजतीति स्मरणकलेवरत्यागयोः भिन्नकालत्वेऽपि न कश्चिच्छब्दविरोध इति मन्दमतेः शङ्का स्यात् । सा मा भूदित्येवमर्थं "अन्ते" इति स्मरणस्य विशेषणमुपात्तम् । तेनात्र स्मरणकलेवरत्यागयोरेककालत्वसिद्धिरिति । मन्दमतेरित्यस्य कृत्यमाह ॥ सुमतेरिति ॥ कुत इत्यत आह ॥ स्मरन् इति ॥ "लटः शतृशानचौ" इति लडादेशत्वेनाऽपि शतुर्विधानमस्ति । स च लडिति वर्तमाने पुनः लड्ग्रहणसामर्थ्यात् क्वचित् प्रथमासामानाधिकरण्येऽपि भवति । लक्षणे विहितत्वाच्च लडादेशो बलीयान् । तत्र[1] क्रियायामित्युपपदसापेक्षत्वात् । अस्यानपेक्षत्वात् । अप्रथमासमानाधिकरण इत्यस्यातिप्रसक्तिपरिहारमात्रार्थत्वात् । तथा च बलवतो ग्राह्यत्वे स्मरन् त्यजतीत्यस्य स्मरति च त्यजति चेत्यर्थः स्यात् । एवं चान्त इत्यनुक्तेऽपि स्मरणत्यागयोः एककालीनत्वप्रतीतेः सुमतेर्नैव शङ्काकाश इति भावः । ननु दुर्मतिरपि शाब्दं न्यायं जानात्येव । अन्यथा शास्त्रे नाधिक्रियेत । केवलमध्यात्मविषये न प्रवीणः । तत्कथं तस्याऽप्येषा शङ्का स्यात् । ततश्च तं प्रत्यपि "अन्ते" इत्येतद्व्यर्थमित्यत आह ॥ दुर्मतेरिति ॥ दुर्मतेर्भविष्यति शङ्का भिन्नकालत्वविषया ? कुतः ? मरणकाले महद्दुःख जायते । दुःखस्य

---

1. ख. तस्य

च संस्कारविलोपहेतुत्वं प्रसिद्धम्। अतो दुःखात् कारणात् मूर्छितो न स्मरन् त्यजति। कलेवरत्यागसमये स्मरणमसम्भवीति यावत्। एतामनुपपत्तिं पश्यन् बलवन्तमपि लडादेशं विहाय लक्षणार्थमेव हि मन्यत इति भावः। ननु सुमतेरप्येवं शङ्का[1] स्यादेव। कथं चेयं शङ्का तत्वप्रतीतिरेवेति चेन्न। अज्ञानिन एव देहाभिमानिनो देहत्यागमात्मत्यागमिव मन्यमानस्य मरणकाले दुःखं भवति। तदपि मरणक्षणात्पूर्वमेव। ज्ञानी तु सर्वदा देहं हेयमेव मन्यमान न मनागपि दुःखायते। किं तु विशिष्टमेव तस्योत्क्रमणमित्यध्यात्मशास्त्रमनुसन्दधानस्य सुमतेः शङ्काऽनवकाशात्। किं तदध्यात्मशास्त्रमित्यत आह ॥ त्यजन् इति ॥ कश्चित् विद्वान्। अविद्वानपि तत्काले। तस्येति मरणवैशिष्ट्यमात्रपरम्।

नन्वन्त इत्येतत् स्मरणविशेषणं चेत् "सदा तद्भावभावितः" इत्यनेनैव गतार्थं स्यात्। अन्यथा तद्व्यर्थं भवेदित्यत आह ॥ सदेति ॥ अन्तकालस्मरणमेव तत्प्राप्तिसाधनम्। न च तदकस्माद्भवति। अतस्तदुपायत्वेन सदा तद्भावभावितत्वमुच्यत इति भावः। कथमित्यतो यथाऽयं तदुपायः स्यात्तथा व्याचष्टे ॥ भाव इति ॥ तथाऽभिधानात् इति ॥ "स्याद्भावोऽन्तर्गतं मनः" इत्येवंरूपाभिधानादित्यर्थः। वासितत्वं संस्कृतत्वम्। तस्मिन् भावः तद्भावः। तेन भावित इति मनोधर्मेणाऽत्मोपचर्यते ॥ ६ ॥ ७ ॥

भ० गी०—

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

भा०—

सदा तद्भावभावितत्वं स्पष्टयति ॥ अभ्यासेति ॥ अभ्यास एव योगो अभ्यासयोगः दिव्यं पुरुषं पुरिशयं पूर्णं च।

1. क. शङ्का इत्यतः परं 'किं तु' इत्यधिकः पाठः

"स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो
नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्" ॥

इति श्रुतेः । दिव्यं सृष्ट्यादिक्रीडायुक्तम् । 'दिवु क्रीडा' इति धातोः ॥ ८ ॥

प्र० दी०—

कुतोऽयमर्थ इत्यत उत्तरत्रैवमेव व्याख्यानादिति भावेनाऽह ॥ सदेति ॥ द्वन्द्वादिशङ्काव्युदासार्थमाह ॥ अभ्यास एवेति ॥ अभ्यासातिरिक्तस्य योगस्य प्रकृते उपयोगिनोऽभावादिति भावः । पुरुषश्चाधिदैवतमिति प्रकृतो हिरण्यगर्भोऽत्रोच्यत इति प्रतीतिनिरासार्थमाह ॥ दिव्यमिति ॥ दिव्यत्वेन विशेषणादीश्वर एवायमित्यर्थः । "पॄ पालनपूरणयोः" इत्यतो "विदिपुरोश्च" इति कुषन्प्रत्ययविधानात् पूर्णं चेति सिध्यति । सर्वासु पूर्षु वर्तमान इति स्वरूपानुवादेन पुरुष इति विधेयम् । तस्य व्याख्यानं पुरिशयमित्यादि । आवरणमन्तर्व्याप्तिः । संवरणं वहिराच्छादनम् । ननु दिवि भवो दिव्यः । स च सूर्यमण्डलस्थत्वात् हिरण्यगर्भोऽपि भवतीति कश्चित् । अत आह ॥ दिव्यमिति ॥ औणादिको यक्प्रत्ययः । "परमं" इति विशेषणादिति भावः ॥ ८ ॥

भ० गी०—

कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः
परस्तात् ॥ ९ ॥

भा०—

ध्येयमाह ॥ कविमिति ॥ कविं सर्वज्ञं "यः सर्वज्ञः" इति श्रुतेः । "त्वं कविः सर्ववेदनात्" इति च ब्राह्मे । धातारं धारणपोषणकर्तारम् । डु[1] धाञ् धारणपोषणयोः इति धातोः ।

1. ग. 'डु' इति न पठ्यते

"धाता विधाता परमोत संदृक्"।

इति च श्रुतिः। "ब्रह्मा स्थाणुः" इत्यारभ्य "तस्य प्रसादादिच्छन्ति तदादिष्टफलां गतिं" इति च मोक्षधर्मे। "तमसोऽव्यक्तात् परतः स्थितम्"॥ **तमसः परस्तात् इति**॥ "अव्यक्तं वै तमः"। "परस्तात् हि स ततः" इति पिप्पलादशाखायाम्।

"मृत्युर्वा व तमो मृत्युर्वै तमो ज्योतिरमृतम्"।

इति श्रुतेः॥ ९॥

प्र० दी०—

उत्तरश्लोकगतविशेषणबलाच्च परमात्मैवायमिति भावेन तत्तात्पर्यमाह॥ ध्येयमिति॥ आह विशिनष्टीत्यर्थः। ननु कवित्वमन्येषामप्यस्ति। तत्कथं भगवतो विशेषणमित्यत आह॥ कविमिति॥ परमेश्वरस्य सार्वज्ञे प्रमिते भवेदिदं व्याख्यानम्। तदेव कुत इत्यत आह॥ य इति॥ सर्वज्ञः कविशब्दार्थ इत्येतत्कुत इत्यत आह॥ त्वमिति॥ अन्येषां तु "सर्वे विमोहितधियः" इत्यादिना सार्वज्ञाभावः प्रमितः। ननु धाता विरिञ्चोऽपि प्रसिद्धः। तत्कथमेतद्भगवतो विशेषणमित्यत आह॥ धातारमिति॥ कुतोऽयमर्थ इत्यत आह॥ डु धाञिति॥ तृचः कर्तृवाचित्वं प्रसिद्धमेव। परमेश्वरस्य धातृत्वसद्भावे किं प्रमाणमित्यत आह॥ धातेति॥ विधाता कर्ता। परमा संदृक् परमज्ञानरूपः। "सर्वस्य धातारं" इत्येतद्भगवत एव नान्येषामित्यत्र प्रमाणमाह॥ ब्रह्मेति॥ तेन भगवता दिष्टं दत्तं फलं सुखं यस्यां सा तथोक्ता। मोक्षधर्मे कथितमिति शेषः। 'तमसः परस्तात्' इत्येतदादित्यादिसाधारणमित्यतो द्वेधा सप्रमाणकं व्याचष्टे॥ तमस इति॥ स्थितमिति शेषोक्तिः॥ अप्राकृतविग्रहमित्यर्थः॥ ९॥

भ० गी०—

प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
सततं परं पुरुषमुपैति दिव्यम् ॥ १० ॥

भा०—

वायुजयादियोगयुक्तानां मृतिकाले कर्तव्यमाह विशेषतः ॥ प्रयाणकाल इति ॥ वायुजयादिरहितानामपि ज्ञानभक्तिवैराग्यादिसम्पूर्णानां भवत्येव मुक्तिः । तद्वतां त्वीषज्ज्ञानाद्यसम्पूर्णानामपि निपुणानां तद्बलात् कथञ्चिद्भवतीति विशेषः । उक्तं च भागवते—

"पानेन ते देवकथासुधायाः प्रवृद्धभक्त्या
विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसा
त्वापुरकुण्ठधिष्ण्यम् ॥
तथाऽपरे त्वात्मसमाधियोगबलेन जित्वा
प्रकृतिं बलिष्ठाम् ।
त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः
स्यान्न तु सेवया ते ॥"

इति ।

"ये तु तद्भाविता लोकाः एकान्तित्वं समाश्रिताः ।
एतदभ्यधिकं तेषां तत्तेजः प्रविशन्त्युत ॥"

इति मोक्षधर्मे ।

"सम्पूर्णानां भवेन्मोक्षो विरक्तिज्ञानभक्तिभिः ।
नियमेन तथाऽपीरजयादियुतयोगिनाम् ॥

वश्यत्वान्मनसस्त्वीपत् पूर्वमप्याप्यते ध्रुवम् ॥"

इति च व्यासयोगे ॥ १० ॥

प्र० दी० —

उत्तरश्लोकोक्तं सर्वं सर्वोच्चिक्रमिषुसाधारणमिति प्रतीतिनिरासार्थमाह ॥ वायुजयादीति ॥ साधकाः द्विविधाः भक्त्यादिप्रधाना वायुजयादिप्रधानाश्चेत्यतो विशेषणम् । "विशेषतः" इत्यनेन भक्त्यादीनां साधारण्यमाह ॥ ननु च 'अनुस्मरेत् यः स तं परं पुरुषमुपैति' इत्यन्वयादेकस्य वाक्यस्य कथं भिन्नविषयत्वमुच्यते । एकस्मिन्नपि वाक्ये योगबलेनैव "भ्रुवोर्मध्ये प्राणमावेश्य" इत्येतन्न सर्वविषयमित्येतावन्मात्रमत्र प्रतिपाद्यते । यथा "प्रातरुत्थाय" इति श्रुतौ न भृशं वदेदित्यादिकं किञ्चित्साधारणं किञ्चिदसाधारणम् । कुतोऽस्याऽसाधारण्यं कल्प्यत इत्यत आह ॥ वायुजयादीति ॥ अतो न तत्सर्वसाधारणमिति शेषः । तर्हि को विशेषोऽन्येषां येन वायुजयादिक्लेशमधिकमनुभवन्तीत्यत आह ॥ तद्वतां त्विति ॥ निपुणानां वायुजयादौ कथञ्चिदल्पा इत्यर्थः । किञ्चित् शीघ्रं चेत्यपि ग्राह्यम् । अत्र प्रमाणान्याह ॥ उक्तमिति ॥ यथा यथार्थं बोधं धिष्ण्यम् । मन्दिरं इन्द्रियम् । त्वां विशन्त्येव न तु त इवाञ्जसा तद्भाविता तेन भगवता वासिताः । एतन्मुक्तिलक्षणं फलम् । तेजो नारायणाख्यम् । ईरः समीरः । ध्रुवं ब्रह्म आप्यते तैः ॥ १० ॥

भ० गी० —

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥ ११ ॥

भा०—

तदेव ध्येयं प्रपञ्चयति ॥ यदक्षरमित्यादिना ॥ प्राप्यते मुमुक्षुभिरिति पदं "पद[1] गतौ" इति धातोः । "तद्विष्णोः परमं पदं" इति च श्रुतेश्च ।

"गीयसे पदमित्येव मुनिभिः पद्यसे यतः ।"

इति वचनान्नारदीये ॥ ११ ॥

प्र० दी०—

क्रममुक्त्यर्थमोङ्कारोपासनमुच्यत इत्यन्यथाव्याख्यानमपाकर्तुमाह ॥ तदेवेति ॥ वायुजयच्युतानां मरणकाले कर्तव्यमेव । मामनुस्मरन्नित्यादिविरोधादिति भावः । ननु पदत्वं शब्दस्यैवोङ्कारस्य सम्भवति न विष्णोरित्यत आह ॥ प्राप्यत इति ॥ कर्मण्यकारप्रत्ययः । पदं स्वरूपमिति प्रयोगदर्शनम् ॥ ११ ॥

भ० गी०—

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितो योगधारणाम्
॥ १२ ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्
॥ १३ ॥

भा०—

ब्रह्मनाडीं विना यद्यन्यत्र गच्छति तर्हि विना मोक्षं स्थानान्तरं प्राप्नोतीति सर्वद्वाराणि संयम्य ।

1. अ. पद गतौ
  ऌ

"निर्गच्छन् चक्षुषा सूर्यं दिशः श्रोत्रेण चैव हि"।

इत्यादिवचनात् व्यासयोगे मोक्षधर्मे च। हृदि नारायणे।

"ह्रियते त्वया जगद्यस्मात् हृदित्येव प्रभाषसे"।

इति पाद्मे। न हि मूर्धनि प्राणे स्थिते हृदि मनसः स्थितिः सम्भवति।

"यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा"।

इति व्यासयोगे। योगधारणामास्थितः योगभरण एवाभियुक्त इत्यर्थः ॥ १२ ॥ १३ ॥

प्र० दी०—

ननु मनो निरुध्येत्यनेनैव सर्वेन्द्रियसंयमनं लब्धम्। तत्किं पुनरुच्यते। मैवम्। वायुसञ्चरणद्वाराणां नाडीनामत्र ग्रहणात्। तन्नियमनं किमर्थमित्यत आह॥ ब्रह्मेति॥ इति[1] हेतौ। इत्युक्तमिति शेषः। अत्र प्रमाणमाह॥ निर्गच्छन्निति॥ सूर्यं गच्छति। मोक्षधर्मे चायमेवार्थ उक्त इति शेषः। "हृदि" इत्यस्य प्रसिद्धार्थता-निरासार्थमाह॥ हृदीति॥ "हरतेः क्विप् च" इति क्विप्। प्रसिद्धार्थ एव किं न स्यादित्यत आह॥ न हीति॥ कुतो न सम्भवतीत्यत आह॥ यत्रेति॥ आदौ हृदि निरुध्येत्यध्याहारो दोषः। मरण-वेलायामखण्डस्मृतिर्वक्तव्या। तत्कथं धारणोच्यत इत्यत आह॥ योगेति॥ १२॥ १३॥

भ० गी०—

**अनन्यचेताः सततं यो मां स्मरति नित्यशः।**
**अस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥१४॥**

भा०—

नित्ययुक्तस्य नित्योपायवतः। योगिनः परिपूर्णयोगस्य ॥१४॥

1. इतिशब्दो

प्र० दी०—

'नित्ययुक्तस्य' 'योगिनः' इत्येतयोः एकार्थतानिरासार्थमाह ॥ नित्येति ॥ नित्योपायवत्वेन सम्पूर्णयोगस्येत्यर्थः ॥ १४ ॥

भ० गी०—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाऽऽप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥१५॥

भा०—

तत्प्राप्तिं स्तौति ॥ मां इति ॥ परमां सिद्धिं गता इति हि तत्र हेतुः ॥ १५ ॥

प्र० दी०—

"स याति परमां गतिम्"। "तस्याहं सुलभः" इति द्वेधा वचनात् परमगतिः भगवल्लाभश्च पृथगिति न मन्तव्यम् । भगवत्प्राप्तेरेवोत्तरत्र स्तुतेः । अन्यथोभयस्तुतिप्रसङ्गादित्यभिप्रायेणाऽऽह ॥ तत्प्राप्तिमिति ॥ तर्हि कथं "मामुपेत्य" इत्युक्त्वा 'संसिद्धिं परमां गताः' इति पृथगुक्तिरित्यत आह ॥ परमामिति ॥ ये मामुपेताः ते परमां सिद्धिं मोक्षलक्षणां हि गताः । न च मुक्तानां निर्बीजं जन्म सम्भवतीत्येवं तत्र स्वयं प्राप्तानां जन्माभावे हेतुरयमुच्यते । न तु भगवत्प्राप्तेरन्या परमसंसिद्धिप्राप्तिरित्यर्थः ॥ १५ ॥

भ० गी०—

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

भा०—

महामेरुस्थब्रह्मसदनमारभ्य न पुनरावृत्तिः । तच्चोक्तं नारायणगोपालकल्पे—

"आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि।
तथाऽप्यभावस्सर्वत्र प्राप्यैव वसुदेवजम्" ॥

इति ॥ १६ ॥

प्र० दी०—

"आब्रह्मभुवनाल्लोकाः पुनरावर्तिन इति सत्यलोकसहितानां[1] पुनरावृत्तिरुच्यत" इत्येतदपव्याख्यानमिति भावेनाऽह ॥ महामेरुस्थेति ॥ परतः स्थितानाम्। एवं जनलोकमारभ्येत्यपि ग्राह्यम्। कुत एतदित्यतः श्लोकभागमेनैव व्याचष्टे॥ तच्चेति ॥ पृथिवीसम्बन्धिनां तदसम्बन्धिनां लोकानां ग्रहणायोभयोपादानम्। परतः स्थितानाम्। यद्यपीति शेषः। अभावो जनेर्लभ्यत इति शेषः। अनेनैवं व्याख्यातं भवति। महामेरुस्थब्रह्मसदनं जनलोकं चारभ्य न पुनरावृत्तिः। अतो "मामुपेत्य पुनर्जन्म" इति किमुच्यत इति चेत्। सत्यं आब्रह्मभवनादेवमाजनाच्चार्वाग्भवा एव लोकाः पुनरावर्तिनः। परे न पुनरावर्तिन इति यावत्। तथाऽपि नोक्तमयुक्तम्। यतस्तेषु लोकेषु स्थितं मामुपेत्यावस्थितस्य पुनर्जन्म न विद्यत इति। अन्यथा "मामुपेत्य पुनर्जन्म" इत्युक्तत्वादुत्तरार्धवैयर्थ्यं च ॥ १६ ॥

भ० गी०—

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः।
रात्रिं युगसहस्रां तां तेऽहोरात्रविदो जनाः ॥१७॥

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके॥ १८ ॥

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥

1. ख. सत्यलोकसहितानां इत्यतः परं लोकानां इत्यधिकः पाठः

परस्तस्मात्तु भावोऽन्यो ऽव्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२०॥

भा०—

मां प्राप्य न पुनरावृत्तिरिति स्थापयितुमव्यक्ताख्यात्मसामर्थ्यं दर्शयितुं प्रलयादि दर्शयति ॥ सहस्रयुगेत्यादिना ॥ सहस्रशब्दोऽनेकवाची । ब्रह्म परम् । 'सा विश्वरूपस्य रजनी' इति श्रुतिः । द्विपरार्धप्रलय एवात्र विवक्षितः । "अव्यक्ताद्व्यक्तयः सर्वाः" इत्युक्तेः । उक्तं च महाकौर्मे—

"अनेकयुगपर्यन्तं महाविष्णोस्तथा निशा ।
रात्र्यादौ लीयते सर्वमहरादौ तु जायते" ।

इति । "यः स सर्वेषु भूतेषु" इति वाक्यशेषाच्च ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

प्र० दी०—

उत्तरप्रकरणस्यासङ्गतिमाशङ्क्याऽऽह ॥ मां प्राप्येति ॥ अवस्थितानामिति शेषः । प्रतिज्ञामात्रेण हि तदुक्तम् । अव्यक्तसामर्थ्यस्यात्र कथनात्कथं "आत्म" इत्युच्यत इत्यत उक्तम् ॥ अव्यक्ताख्येति ॥ प्रलयादीति ॥ तत्कारणत्वं आत्मनः । सृष्टिप्रलययोरिदम्पूर्वत्वाभावज्ञापनाय गीतामुल्लङ्घ्योक्तम् । अत्र सहस्रशब्दो दशशतवाचीति प्रतीतिनिरासायाऽऽह ॥ सहस्रेति ॥ बहुशब्दपर्यायोऽयम् । न तु प्रसिद्धार्थः । विरिञ्चाहोरात्रयोः प्रसिद्धस्य सहस्रचतुर्युगपर्यन्तत्वात्कथमेतदित्यत आह ॥ ब्रह्मेति ॥ तथा द्विपरार्धप्रलयस्याऽऽदिसृष्टेश्चात्र विवक्षितत्वादुक्तं युक्तम् । ननु परस्य ब्रह्मणो नित्यत्वादहोरात्रे न स्तः । तत्कथं तत्परमेतदित्यत आह ॥ सेति ॥ सा निर्व्यापारावस्था परिपूर्णरूपस्यापि हरेः रजनीत्यर्थः । अनेनाहरपि सिद्धम् । भवेदेतत् यद्यत्र द्विपरार्धप्रलयस्याऽऽदिसृष्टेश्च विवक्षेत्यत्र प्रमाणं

स्यादित्यत आह ॥ द्विपरार्धेति ॥ एवमादिसृष्टेश्चेत्यपि ग्राह्यम् । न ह्यवान्तरसृष्टिप्रलययोः सर्वकार्योत्पत्तिविनाशाविति भावः । आगमान्तरसम्मतेश्चैवमित्याह ॥ उक्तं चेति ॥ इतोऽप्येवमित्याह ॥ य इति ॥ न ह्यवान्तरप्रलये सर्वेषामाकाशादीनां भूतानां नाशः । नापि विरिञ्चस्य पञ्चभूतनाशेऽप्यविनाशित्वमिति भावः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

**भ० गी०—**

**अव्यक्तोऽक्षर इत्युक्तः ता[1]माहुः परमां गतिम् ।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २२ ॥**

भा०—

अव्यक्तो भगवान् । "यं प्राप्य न निवर्तन्ते" इति "मामुपेत्य" इत्यस्य परामर्शात् । "अव्यक्तं परमं विष्णुं" इति प्रयोगाच्च गारुडे । धाम स्वरूपम् । तेजः स्वरूपम् ।

"तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते ।"

इत्यभिधानात् ॥ २१ ॥

प्र० दी०—

इदानीं "अव्यक्ताख्यात्म" इति यदुक्तं तत्साधयितुमाह ॥ अव्यक्त इति ॥ 'मामुपेत्य' इत्युक्तार्थस्य "यं प्राप्य न निवर्तन्ते" इत्यव्यक्तविषयतया परामर्शात् । न केवलमव्यक्तशब्दो युक्तिबलाद्भगवति नीयते । किं तु वाचकश्च तस्येत्याह ॥ अव्यक्तमिति ॥ कथं तर्हि भगवताऽव्यक्तस्य स्वस्थानत्वमुच्यत इत्यत आह ॥ धामेति ॥ २१ ॥

---

1. अ. तम्

भ० गी०—

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥२२॥

भा०—

परमसाधनमाह ॥ पुरुष इति ॥ २२ ॥

प्र० दी०—

"भक्त्या युक्त" इति भक्तेः भगवत्प्राप्तिसाधनत्वस्योक्तत्वात्पुनरुक्तमुत्तरं वाक्यमित्यत आह ॥ परमेति ॥ अन्यैः साधनैः सहोक्तत्वेन तत्साम्यशङ्कायां साधनेषु भक्तेः परमत्वमनेनाऽऽह । तच्च पुनर्वचनेनैव द्योत्यमिति भावः ॥ २२ ॥

भ० गी०—

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥२३॥

भा०—

यत्कालाद्यभिमानिदेवतागता आवृत्त्यनावृत्ती गच्छन्ति ता आह ॥ यत्रेत्यादिना ॥ काल इत्युपलक्षणम् । अग्न्यादेरपि वक्ष्यमाणत्वात् ॥ २३ ॥

प्र० दी०—

यस्मिन् काले मृता आवृत्त्यनावृत्ती यान्ति तत्प्रतिपादनार्थमुत्तरो ग्रन्थ इत्यन्यथाप्रतीतिनिरासार्थमाह ॥ यदिति ॥ याश्च ताः कालाभिमानिन्यश्चेति विग्रहः । देवतागता इति ॥ तदधिष्ठितमार्गाभ्यां गता इत्यर्थः । काल इत्युक्तत्वात्कथमादिपदप्रक्षेपेण व्याख्यानमित्यत आह ॥ काल इति ॥ कुत इत्यत आह ॥ अग्न्यादेरिति ॥ अग्निर्ज्योतिर्धूमानाम् ॥ २३ ॥

*

भ० गी०—

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ २६ ॥

भा०—

ज्योतिः अर्चिः । "ते अर्चिषमभिसम्भवन्ति" इति हि श्रुतिः । तथा च नारदीये—"अग्निं प्राप्य ततश्चार्चिः ततश्चाप्यहरादिकम्" इति । अभिमानिदेवताश्चाग्न्यादयः । कथमन्यथा "अह्न आपूर्यमाणपक्षं" इति युज्यते ।

"दिवादिदेवताभिस्तु पूजितो ब्रह्म याति हि।"

इति ब्राह्मे । मासाभिमानिन्यो अयनाभिमानी च पृथक् । तच्चोक्तं गारुडे—

"पूजितस्त्वयनेनासौ मासैः परिवृतेन हि।"

इति । अहरभिजिता शुक्लं पौर्णमास्या अयनं सिषुवा सह । तच्चोक्तं ब्रह्मवैवर्ते—

"साह्ना मध्यन्दिनेनाथ शुक्लेन च सपूर्णिमा ।
सविष्वा चायनेनासौ पूजितः केशवं व्रजेत् ॥"

इति ॥ २४ ॥ २५ ॥ २६ ॥

प्र० दी०—

ज्योतिश्शब्दस्यानेकार्थत्वात् विवक्षितमर्थमाह ॥ ज्योतिरिति ॥ अभिसम्भवन्ति प्राप्नुवन्ति । श्रुतिपुराणयोरह्नः प्राग-

र्चिषः प्राप्तेरुक्तेः तत्समाख्यानादित्यर्थः । प्रातीतिक एवार्थः किं न स्यात् । कुतोऽभिमानिदेवताग्रहणमित्यत आह ॥ अभिमानीति ॥ आदिशब्दसमर्थनेन सह समुच्चयार्थश्चशब्दः । अन्यथा मरणकालपरिग्रहे । इति श्रुतिः । उपलक्षणमेतत् । "अहः शुक्र" इति गीताऽपि । अहोरात्रव्यतिरिक्तपक्षाभावादिति भावः । समाख्यानाच्चैवमित्याह ॥ दिवादीति ॥ किं च "षण्मासा उत्तरायणं" "षण्मासा दक्षिणायनं" इत्येतदप्यभिमानिदेवतां गमयति । मासातिरिक्तायनाभावात् । अभिमानिनां च पृथक्त्वेन पृथगुक्तिसम्भवादिति भावेनाह ॥ मासेति ॥ अनेन षण्मासा एवायनमिति व्याख्यानं निरस्तं भवति । पुराणविरोधात् । अत्रानुक्तमपि किञ्चिदध्याहरति ॥ अहरिति ॥ सहस्थितं यातीत्यप्यत्र द्रष्टव्यमिति भावः । एतदप्यभिमानिदेवतापरिग्रहसमर्थनार्थम् । प्राधान्यादेरविवक्षितत्वात् "स्वाह्ना" इत्युक्तम् । सपूर्णिमा सपूर्णिमेन 'सुपां सुलुक्' इत्यादेः । विषुशब्दस्योवङ्यणादेशविकल्पश्छान्दसः ॥ २४ ॥ २५ ॥ २६ ॥

भ० गी०—

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

वेदेषु यज्ञेषु तपस्सु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाऽद्यम् ॥ २८ ॥

॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अक्षरपरब्रह्मयोगो नाम अष्टमोऽध्यायः ॥ ८ ॥

भा०—

एते सृती सोपाये ज्ञात्वाऽनुष्ठाय न मुह्यति । तच्चाह स्कान्दे—

"सृती ज्ञात्वा च सोपाय अनुष्ठाय च साधनम् ।
न कश्चित् मोहमाप्नोति न चान्या तत्र वै गतिः ॥"

इति ॥ २७ ॥ २८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये अष्टमोऽध्यायः ॥ ८ ॥

प्र० दी०—

"नैते सृती पार्थ" इति मार्गज्ञानमात्रेण मोहाभावोऽभिधीयत इति प्रतीतिनिरासार्थमाह ॥ एत इति ॥ अनुष्ठायोपायमिति शेषः । कुत एतत् ? "योगी" इत्युक्तत्वात् । पुराणसंवादाच्चेत्याह ॥ तच्चेति ॥ मोहो भगवद्विस्मृतिरूपः । अन्या भगवत्प्राप्तेः । भाष्ये पुराणे चानुष्ठायेत्याकारस्थाने क्वचिदीकारो लेखकदोषेण पतितः । मूलपुस्तकेष्वदर्शनात् ॥ २७ ॥ २८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां अष्टमोऽध्यायः समाप्तः ॥ ८ ॥

---

## ॥ अथ नवमोऽध्यायः ॥

भ० गी०—

श्रीभगवानुवाच—

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात्
॥ १ ॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

भा०—

॥ हरिः ॐ ॥ सप्तमाध्यायोक्तं स्पष्टयत्यस्मिन्नध्याये। राजविद्या प्रधानविद्या। प्रत्यक्षं ब्रह्मावगम्यते येन तत् प्रत्यक्षावगमम्। अक्षेष्विन्द्रियेषु प्रति प्रति स्थित इति प्रत्यक्षः। तथा च श्रुतिः—"यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरम्। यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः"। "यो वाचि[1] तिष्ठन्", "यः चक्षुषि तिष्ठन्" इत्यादेः। "य एषोऽन्तरक्षिणि पुरुषो दृश्यते" इति च। "अङ्गुष्ठमात्रः पुरुषः अङ्गुष्ठं च समाश्रितः" इति च। "त्वं मनस्त्वं चन्द्रमास्त्वं चक्षुरादित्यः" इत्यादेश्च मोक्षधर्मे। "स प्रत्यक्षः प्रति प्रति[2] हि सोऽक्षेष्वक्षवान् भवति य

---

1. अ. यो विज्ञाने तिष्ठन्  2. अ. न प्रतेः द्विरुक्तिः

एवं विद्वान् प्रत्यक्षं वेद" इति सामवेदे बाभ्रव्य[1]शाखायाम्। धर्मो भगवान्। तद्विषयं धर्म्यम्। सर्वं जगद्धृत्त इति धर्मः। "पृथिवी धर्ममूर्धनि" इति च अयोगान्मोक्षधर्मे। "भारभृत् कथितो योगी" इति च। "भर्ता सन् भ्रियमाणो बिभर्ति" इति च श्रुतिः। "धर्मो वेदमग्र आसीन्न पृथिवी न वायुर्नाकाशो न ब्रह्मा न रुद्रो न देवा न ऋषयः सोऽध्यायत्" इति च सामवेद[2]शाखायाम् ॥ १ ॥ २ ॥ ३ ॥

प्र० दी०—

पूर्वसङ्गतत्वेनाध्यायार्थमाह ॥ सप्तमेति ॥ भगवन्माहात्म्यमिति शेषः। पदार्थज्ञानपूर्वकं वाक्यार्थज्ञानमिति सप्तमोक्तपदार्थानष्टमे व्याख्याय नवमे तद्वाक्यार्थं स्पष्टीकरोतीत्यर्थः। 'राज्ञामश्वपति-जनकादीनां विद्या राजविद्या' इति कश्चित्। तदसत्। ब्राह्मणादी-नामनधिकारप्रसङ्गादिति भावेनाह ॥ राजेति ॥ राजेव राजा। राजा चासौ विद्या चेति राजविद्येत्यर्थः। प्रत्यक्षेणावगमो यस्येति व्याख्यान-मसत्। भगवन्माहात्म्यस्य शास्त्रैकसमधिगम्यत्वात्। अद्वैतोद्धारस्य प्रमाणविरुद्धत्वादिति भावेनाह ॥ प्रत्यक्षमिति ॥ शास्त्रैकवेद्यं ब्रह्म कथं प्रत्यक्षमित्यत आह ॥ अक्षेष्विति ॥ प्रत्यक्षः परमात्मा। प्रादि-समासोऽयं नाव्ययीभाव इति ज्ञापनाय नपुंसके प्रक्तेऽपि पुल्लिङ्ग-निर्देशः। अन्यथा षष्ठी न श्रूयेत। परमात्मनोऽक्षेषु स्थितत्वे किं मानमित्यत आह ॥ तथा चेति ॥ प्राण इति प्राणाभिमानिनी देव-तोच्यते। प्राणादन्तरो भिन्नः। अङ्गुष्ठेति कर्मेन्द्रियाधिष्ठातृत्वमुच्यते। मन इत्यादेः मनआदिस्थ इत्यर्थः। प्रत्यक्षशब्दस्यायमर्थ इत्यत्र श्रुतिमाह ॥ स इति ॥ प्रति स्थितः। अक्षवान् प्रशस्तेन्द्रियः। यो विद्वानेवं प्रत्यक्षशब्दार्थं वेद। धर्मादनपेतं धर्म्यमिति निर्वचनेऽपि न प्रसिद्धधर्माविरुद्धत्वमर्थः। निवृत्तधर्मस्य ब्रह्मज्ञानाविरुद्धतायाः प्रसिद्धत्वात्। प्रवृत्तिलक्षणस्य तु तद्विरुद्धत्वादिति भावेनाह ॥ धर्म इति ॥ तस्मादनपेतमित्यर्थस्तद्विषयमिति। कथं भगवान् धर्म

1. अ. वारुणशाखायाम् 2. अ. सामवेदे बाभ्रव्यशाखायाम्

इत्यत आह ॥ सर्वमिति ॥ धृञो मन्प्रत्यय औणादिकः । धारके धर्मशब्दप्रवृत्तिः कुत इत्यत आह ॥ पृथिवीति ॥ पर्वतोपरीत्यर्थः । भगवतः सर्वधारकत्वे किं मानमित्यत आह ॥ भारभृदिति ॥ सर्वत्र स्थितो भगवान् सर्वेण ध्रियते । स कथं सर्वस्य धारक इत्यत आह ॥ भर्तेति ॥ भर्ता सन्नेव ध्रियमाणः । न स्वकीयस्थित्यै । धर्मशब्दस्य भगवद्वाचित्वं कुत इत्यत आह ॥ धर्मो वेति ॥ इदमग्रे अस्याग्रे । अत्र पुण्यं धर्मः किं न स्यादिति शङ्कानिरासार्थं "सोऽध्यायत्" इति वाक्यशेषोदाहरणम् ॥ १ ॥ २ ॥ ३ ॥

भ० गी०—

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

भा०—

प्रत्यक्षावगमशब्देन परोक्षज्ञानसाधनत्वमुक्तम् । तज्ज्ञानाद्याह ॥ मयेति ॥ तर्हि किमिति न दृश्यत इत्यत आह ॥ अव्यक्तमूर्तिनेति ॥ ४ ॥

प्र० दी०—

एवं तर्हि पुनरुक्तिः स्यात् । ब्रह्मविषयं ज्ञानमित्यस्य ब्रह्मावगम्यते विषयीक्रियत अनेन ज्ञानेनेत्यस्य च भेदाभावादित्यत आह ॥ प्रत्यक्षेति ॥ नावगमशब्देन विषयीकरणमुच्यते । किं त्ववगतिसाधनत्वम् । न च ज्ञानस्य तद्विरुद्धम् । परोक्षज्ञानस्यापरोक्षज्ञानसाधनत्वोपपत्तेरिति भावः । ज्ञानं विज्ञानसहितं प्रवक्ष्यामीति प्रतिज्ञाय "यज्ज्ञात्वा" इत्यादिना तत्प्रशंसादिकमुक्तम् । अतो "मया ततं" इत्यादिकमपि तथाभूतमेव किञ्चित्, उत प्रतिज्ञातमुच्यत इति शङ्कायामाह ॥ तदिति ॥ प्रतिज्ञातमित्यर्थः । यस्यापरोक्षज्ञानसाधनत्वमुक्तं तदिति वा । कृत्स्नाध्यायप्रतिपाद्योक्तिरियम् । विशेषण-

वैयर्थ्यमाशङ्क्याह ॥ तर्हीति ॥ सर्वव्यापी चेदित्यर्थः । न दृश्यते सर्वत्रेति शेषः ॥ ४ ॥

भ० गी०—

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममाऽऽत्मा भूतभावनः ॥५॥

भा०—

मत्स्थत्वेऽपि यथा पृथिव्यां स्पृष्ट्वा स्थितानि न तथा मयीत्याह ॥ न चेति ॥

"न दृश्यश्चक्षुषा चासौ न स्पृश्यः स्पर्शनेन च"।

इति हि मोक्षधर्मे । 'संज्ञासंज्ञ' इति च । ममाऽऽत्मा देह एव भूतभावनः ।

"महाविभूतेर्माहात्म्यशरीर" इति हि मोक्षधर्मे ॥ ५ ॥

प्र० दी०—

"मत्स्थानि सर्वभूतानि" इत्युक्त्वा पुनः कथं "न च मत्स्थानि" इति व्याहतमुच्यत इत्यत आह ॥ मत्स्थत्वेऽपीति ॥ स्पृष्ट्वेति ॥ स्पर्शनेन्द्रियेण तां ज्ञात्वाऽन्योन्यधर्मसङ्क्रान्तिमासाद्य चेत्यर्थः । परमेश्वरस्य स्पर्शनाद्यवेद्यत्वे प्रमाणमाह ॥ नेति ॥ संज्ञया शब्देनैव संज्ञा सम्यक् ज्ञानं यस्यासौ तथोक्तः । मत्स्थानीत्यादेरुक्तत्वाद्भूतभृत्त्वादिकं पुनरुक्तमित्यत आह ॥ ममेति ॥ प्राक् भूताधारत्वादिकं स्वस्योक्तम् । अत्र पुनरव्यक्तमूर्तिनेति मूर्तावुक्तायां साऽस्मदादीनामिव भिन्नेति भ्रान्तिनिरासार्थं स्वलक्षणं स्वदेहस्योच्यत इत्यर्थः । भूतभावनत्वस्याधिकस्योक्तेश्च न पुनरुक्तिरिति भावेनोक्तम् ॥ भूतेति ॥ स्यादिदं व्याख्यानं यदि भगवद्देहस्येदं भवेत् । तदेव कुत इत्यत आह ॥ महाविभूतेरिति ॥ माहात्म्यमेव शरीरं यस्यासौ तथोक्तः ॥ ५ ॥

भ० गी०—

यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥

भा०—

"मत्स्थानि", "न च मत्स्थानि" इत्यत्र दृष्टान्तमाह ॥ यथाऽऽकाशस्थित इति ॥ न हि आकाशस्थितो वायुः स्पर्शाद्याप्नोति ॥ ६ ॥

प्र० दी०—

एकमेकत्राश्रितमित्यत्रासम्भावनाऽभावात् किं तद्दृष्टान्तत्वोक्त्येत्यत आह ॥ मत्स्थानीति ॥ तत्र स्थितत्वेऽप्यन्योन्यधर्मासङ्क्रान्त्यादावित्यर्थः । तदत्र न प्रतीयत इत्यतो व्याचष्टे ॥ न हीति ॥ स्पर्शादीति तद्धर्मोपलक्षणम् ॥ ६ ॥

भ० गी०—

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥७॥

भा०—

ज्ञानप्रदर्शनार्थं प्रलयादि प्रपञ्चयति ॥ सर्वभूतानीत्यादिना ॥ ७ ॥

प्र० दी०—

यथा "मया ततं" इत्याद्युक्तोपपादार्थान्युत्तरवाक्यानि, न तथा "सर्वभूतानि" इत्यादि । किं तु स्वतन्त्रमेव ज्ञानप्रतिपादकमिति भावेनाह ॥ ज्ञानेति ॥ प्रलयादीति ॥ तत्कारणत्वम् ॥ ७ ॥

भ० गी०—

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥

भा०—

प्रकृत्यवष्टम्भस्तु यथा कश्चित् समर्थोऽपि पादेन गन्तुं लीलया दण्डमवष्टभ्य गच्छति। "सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि" इति[1]।

"सर्वभूतगुणैर्युक्तं दैवं मां ज्ञातुमर्हसि"

इति च मोक्षधर्मे[2]।

"विदित्वा सप्त सूक्ष्माणि षडङ्गं च महेश्वरम्।
प्रधानविनियोगस्थः परं ब्रह्माधिगच्छति"॥

इति च।

"न कुत्रचित् शक्तिरनन्तरूपा विहन्यते तस्य महेश्वरस्य।
तथापि मायामधिरुह्य देवः प्रवर्तते सृष्टिविलापनेषु"॥

इति ऋग्वेदखिलेषु।

"मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे"।

इति भागवते।

"अथ कस्मादुच्यते परं ब्रह्मेति, बृंहति[3] बृहयति[4]"।

इति च अथर्वणे।

"पराऽस्य शक्तिर्विविधैव श्रूयते" इति च।
"विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि
विममे रजांसि"।

---

1. अ. इति च मोक्षधर्मे
2. अ. मोक्षधर्मे इति न पाठः
3. अ. बृहति
4. अ. बृंहति

"न ते विष्णो जायमानो न जातो देव महिम्नः
परमं तमाप"।

इत्यादेश्च।

प्रकृतेर्वशादवशम्।

"त्वमेवैतत्सर्जने सर्वकर्मण्यनन्तशक्तोऽपि स्वमाययैव।
मायावशं चावशं लोकमेतत् तस्मात्[1] स्रक्ष्यस्यसि
पासीश विष्णो"।

इति गौतमखिलेषु ॥ ८ ॥

प्र० दी०—

"प्रकृतिं स्वामवष्टभ्य" इति वचनात् तद्विकलस्य भगवतो न सामर्थ्यमिति प्रतीतिनिरासार्थमाह ॥ प्रकृतीति ॥ तथा लीलयैव न तु केवलस्य सामर्थ्याभावादिति शेषः। कुत एतत्। भगवतः सर्वसामर्थ्यसम्पूर्णस्य प्रमितत्वादित्याह ॥ सर्वेति ॥ सर्ववस्तुसामर्थ्यैः। एवं भूतवत् पारतन्त्र्याद्युपेतम्। किंतु दैवं देवोत्तमम्। पञ्चभूतानि महदहङ्कारौ च सप्त सूक्ष्माणि। 'सर्वज्ञता तृप्तिः' इत्युक्तप्रकारेण षडङ्गम्। प्रधानस्य मूलप्रकृतेः विनियोगः कार्येषु यो व्यापारः। तत्स्थः तज्ज्ञानी। मायामधिरुह्य प्रकृतिमवष्टभ्य। कं कः, प्रवोचं प्रावोचत्। प्रकृतेर्वशात् विसृजामीति आविद्यकमेवेश्वरस्य कर्तृत्वम्। वस्तुतस्तु निष्क्रियत्वमित्युच्यत इत्यन्यथाप्रतीतिनिरासायाऽन्यथाऽन्वयमाह ॥ प्रकृतेरिति ॥ कुत एतदित्यतः पूर्वोक्तार्थसहिते[2]त्यत्र प्रमाणमाह ॥ त्वमेवेति ॥ एतत्सर्जने एतस्य लोकस्य सृष्ट्याम्। अन्यस्मिन्नपि पालनादौ सर्वकर्मणि। तस्मात् मायावशत्वादेवावशम्। एतत् एतं स्रक्ष्यसि सृजसि ॥ ८ ॥

---

1. अ. अत्र मन्त्रे 'तस्मात्', 'असि' 'ईश' 'विष्णो' इति पदानि पठ्यन्ते।
2. क. पूर्वोक्तार्थसहिते प्रमाणं आह

भ० गी०—

न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥

भा०—

उदासीनवत् । न तु उदासीनः । तदर्थमाह ॥ असक्तमिति ॥ "अवाक्यनादर" इति श्रुतिः ।

"द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया" ॥

इति भागवते ।

यस्यासक्त्यैव सर्वकर्मशक्तिः कुतस्तस्य सर्वकर्मबन्ध इति भावः । "न कर्मणो वर्धते नो कनीयान्" इति हि श्रुतिः । यः कर्माणि[1] नियामयति कथं च[2] तं कर्म बध्नाति ॥ ९ ॥

प्र० दी०—

स्वतः कर्तृत्वे कथमुदासीनत्वमुच्यत इति चेन्न । वतिना तस्य निषिद्धत्वादिति भावेनाह ॥ उदासीनवदिति ॥ अनुदासीनत्वेऽपि वतिर्व्यर्थः स्यात् । अन्यस्य तदर्थस्याभावादित्यत आह ॥ तदर्थमिति ॥ वत्यर्थं सादृश्यं स्वयमेव विवृणोतीत्यर्थः । परमेश्वरस्य कर्मसु सक्त्यभावे प्रमाणमाह ॥ अवाक्येति ॥ सर्वथोदासीन एव किं न स्यादिति चेन्न । तथा सति प्रकृत्यादीनामसत्त्वप्रसङ्गादिति भावेनाह ॥ द्रव्यमिति ॥ यदीश्वरस्य स्वतः कर्तृत्वं स्यात् तदोदासीनमित्येतत् "न तु मां तानि कर्माणि निबध्नन्ति" इत्यत्र कथं हेतुः स्यादित्यत आह ॥ यस्येति ॥ असक्त्याऽनादरेणाऽनायासेनेति यावत् । भगवतोऽपि कर्मबन्धोऽस्ति इति केषाञ्चित् प्रलापो यथा विष्णुर्येनेत्यादि । तन्निरासाय श्रुत्युपपत्ती प्राह ॥ न कर्मणेति ॥ नियामयति नियच्छति ॥ ९ ॥

1. अ. कर्मापि  2. अ. कथं च तत् तं बध्नाति

भ० गी०—

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥

भा०—

उदासीनवदिति चेत् स्वयमेव प्रकृतिः सूयत इत्यत आह ॥ **मयेति** ॥ प्रकृतिसूतिद्रष्टा कर्ता अहमेवेत्यर्थः । तथा च श्रुतिः—

"यतः प्रसूता जगतः प्रसूती तोयेन जीवान्
व्यससर्ज भूम्याम्" ।

इति ॥ १० ॥

प्र० दी०—

कथं तर्ह्यहं केवलं द्रष्टैव । प्रकृतिरेव चराचरं सूयत इत्युत्तरवाक्यमित्यतः तन्निवर्त्याशङ्कां प्रदर्श्य व्याचष्टे ॥ उदासीनवदिति ॥ भगवतोदासीनसादृश्यं स्वयमेव व्याख्यातम् । तदज्ञात्वा क्रियाऽभाव एवोक्त इति मत्वा शङ्कितम् । पुरा प्रकृतिं स्वामवष्टभ्य विसृजामीत्युक्तम् । इदानीं तूदासीनवदिति निष्क्रियत्वमुच्यते । एवं तर्हि प्रकृतिरेव सूयते । त्वयि तु तत्सन्निधानात् कर्तृत्वोपचारमात्रमित्यापन्नमिति तन्निवृत्त्यर्थमिदं वाक्यम् । तत्राध्यक्षेणेत्यनेन प्रकृतिसूतेः द्रष्टाऽहमेवेत्युच्यते । तृतीयया च तत्प्रयोजककर्ता चाहमेव । न तु तस्याः स्वातन्त्र्यमिति । दर्शनपूर्वकत्वात् प्रयोजकत्वस्य तदुक्तिः । अन्यथा तृतीया व्यर्था स्यादिति भावः । प्रकृतिप्रयोजकत्वं परमेश्वरस्य कुत इत्यत आह ॥ यत इति ॥ प्रसूता सृष्टावभिमुखीभूता । प्रसूती प्रसूतिः । तोयेन कर्मणा । व्यससर्ज विससर्ज । बहुलग्रहणात् ॥१०॥

**भ० गी०—**

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।**
**परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥**

**भा०—**

तर्हि केचित्कथं त्वामवजानन्ति । का च तेषां गतिरित्यत आह ॥ **अवजानन्ति इत्यादिना ॥** मानुषीं तनुं मूढानां मानुषवत् प्रतीतां तनुम् । न तु मनुष्यरूपाम् । उक्तं च मोक्षधर्मे—

"यत्किञ्चिदिह लोकेऽस्मिन् देहबद्धं विशां पते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ।
ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् ।
भूतान्तरात्मा वरद[1]स्सगुणो निर्गुणोऽपि च ।
भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तम" ॥

इति । अवतारप्रसङ्गे चैतदुक्तम् । अतो नावताराः[2] पृथक् शङ्क्याः ।

"रूपाण्यनेकान्यसृजत् प्रादुर्भावभवाय सः ।
वाराहं नारसिंहं च वामनं मानुषं तथा" ॥

इति । तत्रैव प्रथमसर्गकाल एवावताररूपविभक्त्युक्तेश्च[3] । अतो न तेषां मानुषत्वादिर्विना भ्रान्तिम् । भूतं महदीश्वरं चेति भूतमहेश्वरम् । तथा हि बाभ्रव्यशाखायाम्—

"अनाद्यनन्तं परिपूर्णरूपमीशं वराणामपि देववीर्यम्" ।

इति । "अस्य महतो भूतस्य निश्वसितं" इति च ।

"ब्रह्मपुरोहित ब्रह्मकायिक महाराजिक" ।

इति च मोक्षधर्मे ॥ ११ ॥

---

1. अ. वरदो विज्ञेयः 2. अ. नावताराश्च
3. अ. अत्र चशब्दो न श्रूयते

प्र० दी०—

उत्तरवाक्यस्य सङ्गत्यप्रतीतेस्तामाह ॥ तर्हीति ॥ यदि त्वमेव जगतः सृष्टिस्थितिसंहाराणां कर्ता । कैश्चिदवज्ञानात् । तेषां चानर्थाभावादुक्तमसदिति शङ्काभिप्रायः । "मानुषीं तनुमाश्रितं" इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे ॥ मानुषीमिति ॥ भ्रान्त्यनुवाद एवायमिति भावः । कुतो नेत्यत आह ॥ उक्तं चेति ॥ चो हेतौ । शरीराणि हि भौतिकानि भवन्ति । भूतानि चेश्वरस्य बुद्धिजानि । तत्कथं तानि बध्नीयुरित्यर्थः । अत्रैव "ईश्वरो हि" इत्यादिनाऽन्ये-हेतवोऽभिधीयन्ते । विराट् नित्याभिव्यक्तरूपः । वरदो मोक्षप्रदः । सगुणः स्वातन्त्र्यादिगुणवान् । भूतानि प्रलीयन्ते यस्मिन् तदव्यक्तम् । तदभिमानिनी देवता । तस्य शुश्रूषुः । लिङ्गव्यत्ययश्छान्दसः । अस्त्वेतन्मूलरूपविषयम् । अवतारस्य तु कृष्णस्य मानुषत्वं भवत्वित्यत आह ॥ अवतारेति ॥ "यत् तत् ददर्शिवान् ब्रह्मा रूपं हयशिरोधरम्" इति हयग्रीवावतारप्रसङ्गेऽस्तु हयग्रीवस्यैवम् । कृष्णस्तु मानुष-शरीर एव किं न स्यादिति चेन्न । युक्तिसाम्यात् । विशेषप्रमाणाच्चेत्याह ॥ रूपाणीति ॥ असृजत् व्यभजत् । प्रादुर्भावभवायोत्तरत्र सः नारायणः । मानुषं कृष्णादिकम् । तत्रैव मोक्षधर्म एव । प्रथम-सर्गकाल एव । मानुषादिजात्युत्पत्तेः प्रागेवेत्यर्थः । उपसंहरति ॥ अत इति ॥ तेषामवताराणाम् । उत्तरपदविरोधश्चान्यथेति भावेन तद्व्याचष्टे ॥ भूतमिति ॥ भूतं सर्वदा विद्यमानमिति कालानन्त्य-माचष्टे । महदिति । देशात्यनन्त्यम् । ईश्वरमिति गुणानन्त्यम् । भावं याथार्थ्यमिति व्याख्यानापेक्षया नपुंसकम् । अत्र श्रुतिं पठति ॥ तथा हीति ॥ ईशं वराणामितीश्वरम् । षष्ठ्याः परनिपातः । देवाः वीर्यं पुत्रा यस्यासौ तथोक्तः । महतो भूतस्येति देशकालानन्त्यमुच्यते । वराणां देवानामीशत्वे ब्रह्म इति मोक्षधर्मवाक्यं प्रमाणम् । पुरोहितादि-देवनिकायास्त्वदधीना इत्यर्थः । ब्रह्मेति द्विरुक्तिरादरार्था ॥ ११ ॥

22

भ० गी०—

मोघाऽशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥१२॥

भा०—

तेषां फलमाह ॥ **मोघाऽशा इति** ॥ वृथाऽशाः । भगवद्वेषिभिः आशासितं[1] न किञ्चिदाप्यते । यज्ञादिकर्माणि च वृथैव तेषाम् । ज्ञानं च । केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन न कश्चित् पुरुषार्थे आमुष्मिकः तैराप्यत इत्यर्थः । वक्ष्यति च । "तानहं द्विषतः क्रूरान्" इत्यादि । मोक्षधर्मे च—

"कर्मणा मनसा वाचा यो द्विष्यात् विष्णुमव्ययम् ।
मज्जन्ति पितरस्तस्य नरके शाश्वतीस्समाः ।
यो द्विष्यात् विबुधश्रेष्ठं देवं नारायणं हरिम्[2] ।
कथं स न भवेत् द्वेष्यः आलोकान्तस्य कस्यचित्" ॥

इति ।

सर्वोत्कृष्टे ज्ञानभक्ती[3] हि यस्य नारायणे पुष्करविष्टराद्ये ।
सर्वावमे[4] द्वेषयुतश्च तस्मिन् भ्रूणानन्तघ्नोऽस्य समो न चैव ॥

इति सामवेदे शाण्डिल्यशाखायाम् । "द्वेषाच्चैद्यादयो नृपाः ।"

वैरेण यन्नृपतयः शिशुपालपौण्ड्र-
साल्वादयो गतिविलासविलोकनाद्यैः ।
ध्यायन्त आकृतधियः शपनासनादौ
तत्साम्यमीयु[5]रनुरक्तधियः पुनः किम् ॥"

---

1. अ. आशितम् आमुष्मिकं 2. अ. प्रभुम् 3. अ. ज्ञानभक्तीह
4. अ. सर्वावमो 5. अ. आपुः

इति भागवते[1] भक्तप्रियत्वज्ञापनार्थं नित्य[2]ध्यानस्तुत्यर्थं च स्वभक्तस्य कदाचित् शापबलात् द्वेषिणोऽपि भक्तिफलमेव भगवान् ददातीति।

प्र० दी०—

किं च तेषां फलमित्यस्य परिहारो न दृश्यते। अत आह॥ तेषामिति॥ अनर्थत्वप्रदर्शनाय व्याचष्टे॥ वृथेति॥ सम्पदादिप्राप्तिदर्शनात् कथमित्यत आह॥ भगवदिति॥ युद्धादिकर्मणां साफल्यदर्शनात्कथं मोघकर्माण इत्यत आह॥ यज्ञादीति॥ ज्ञानं तत्वविषयं तेषां नास्त्येव। अतः कथं मोघत्वमुच्यत इत्यत आह॥ ज्ञानं चेति॥ ज्ञानं च तेषां वृथैवेत्यस्य केनापीत्यर्थं इति सम्बन्धः। अनेन ज्ञानपदमुपलक्षणमिति चोक्तं भवति। न केवलं पुरुषार्थानवाप्तिः। अपि तु दुःखावाप्तिश्चेति भावेन तत्र प्रमाणान्याह॥ वक्ष्यति चेति॥ आ सम्यक्। लोकान्तस्य चण्डालादेः। पुष्करविष्टरांघ्रे पद्मासनस्य पितरि। भ्रूणानन्तघ्नो अनन्तभ्रूणघ्नः। यद्येवं कथं तर्हि भागवतादौ भगवद्द्वेषस्य मोक्षसाधनत्ववचनमित्यत आह॥ द्वेषादिति॥ तद्गतिं गता इति सम्बन्धः। वैरेण ध्यायन्तः यदीयगत्यादिभिराकृतधियः आकृष्टबुद्धयः। ये पूर्वं भक्ताः शिशुपालादयः तद्विषये भवत्येषा गतिः। न तु पौण्ड्रसाल्वादिविषये। अत आह॥ नित्येति॥ भक्तप्रियत्वज्ञापनार्थमित्युक्तं विवृणोति॥ स्वभक्तस्येति॥ इति भक्तप्रियत्वज्ञापनार्थमिति योजना।

भा०—

भक्ता एव हि पूर्वं शिशुपालादयः। शापबलाद्द्वेषिणः। तत्प्रश्न[3]पूर्वं पार्षदत्वशापादिकथनाच्चैतज्ज्ञायते। अन्यथा किमिति तदप्रस्तुतमुच्यते[4]। भगवतः साम्यकथनं तु द्वेषिणामपि द्वेषमनिरूप्य पूर्वतनभक्तिफलमेव ददातीति ज्ञापयितुम्। न मे भक्तः

1. अ. भगवतो　　2. अ. नित्यध्यानस्तुत्यर्थं इति न पठ्यते

3. अ. तत्प्रश्ने पूर्वपार्षदत्वादिकथनात्　　4. अ. उच्येत

*

प्रणश्यति" इति वक्ष्यति। न च भावो भावकारणं इत्यादिविरोधः। द्वेषभाविनां द्वेष एव भवतीति हि युक्तम्। अन्यथा गुरुद्वेषिणामपि गुरुत्वं भवतीत्याद्यनिष्टमापद्येत। न चाकृतधीत्वे विशेषः। तेषामेव हिरण्यकशिप्वादीनां पापप्रतीतेः।

"हिरण्यकशिपुश्चापि भगवन्निन्दया तमः। विवक्षुरत्यगात् सूनोः प्रह्लादस्यानुभावतः" इति। "यदनिन्दत् पिता मह्यं" इत्यारभ्य "तस्मात् पिता मे पूयेत दुरन्तात् दुस्तरादघात्" इति प्रह्लादेन भगवतो वरयाचनाच्च। बहुषु ग्रन्थेषु च निषेधः, कुत्रचिदेव तदुक्तिरिति विशेषः। यस्मिन् तदुच्यते तत्रैव निषेध उक्तः। महातात्पर्यविरोधश्चोक्तः पुरस्तात्। अयुक्तिमद्वचो युक्तिमन्त्येव बलवन्ति वाक्यानि। युक्तयश्चोक्ता अन्येषाम्। न चैषां काचित् गतिः। साम्येऽपि वाक्ययोः लोकानुकूलाननुकूलयोर्लोकानुकूलमेव बलवत्। लोकानुकूलं च भक्तप्रियत्वं नेतरत्। उक्तं च तेषां पूर्वं भक्तत्वम्—

"मन्ये सुरान् भागवतान् त्र्यधीशे संरंभमार्गाभि-
निविष्टचित्तान्"।

इत्यादि। अतो न भगवद्द्वेषिणां काचित् गतिरिति सिद्धम्। द्वेषकारणमाह॥ राक्षसीति॥ ॥ १२॥

प्र० दी०—

स्यादेतत्। यदि तेषां स्वतो भक्तत्वं, शापबलादेव द्वेषित्वमित्येतत् प्रमितं स्यात्। तदेव कुत इत्यत आह॥ भक्ता एव हीति॥ प्रसिद्धमेवैतत् भागवतादावित्यर्थः। कुतो वचनानामर्थान्तरकल्पनेति चेत् "यो द्विष्यात्" इत्याद्युदाहृतवाक्यविरोधात्। हेत्वन्तरं चाह॥ तत्प्रश्न इति॥

"अहो अत्यद्भुतं ह्येतत् दुर्लभैकान्तिनामपि।
वासुदेवे भगवति गतिश्चैद्यस्य विद्विषः॥"

इति युधिष्ठिरेण द्वेषिणः कथं मुक्तिर्जातेत्येवंरूपे तद्विषये प्रश्ने कृते सति नारदेन।

"मातृष्वसेयो वश्चैद्यो दन्तवक्त्रश्च पाण्डव[1]।
प्रार्षदप्रवरौ विष्णोर्विप्रशापात् पदच्युतौ॥"

इति तदुत्तरत्वेन पूर्वपार्षदत्वादिकं कथ्यते। ततोऽपि द्वेषो न मोक्षसाधनमित्येतज्ज्ञायते। कथमित्यत आह॥ अन्यथेति॥ यदि द्वेषो मोक्षसाधनं स्यात् तदा किमत्राद्भुतम् यतो द्वेषोऽप्येको मुक्तिमार्ग इत्युत्तरं वक्तव्यम्। पूर्वपार्षदत्वादिकमप्रस्तुतमनुपयुक्तं न वक्तव्यं स्यादित्यर्थः। ननु नारदेन "निन्दनस्तव सत्कारः" इत्यादिना भगवतो निन्दादौ साम्यमपि तदुत्तरत्वेन कथ्यते। यदि स्तुतेरिव निन्दाया न मोक्षसाधनत्वं स्यात् तदा तदनुपयुक्तं न वक्तव्यमिति सत्प्रतिपक्षाऽर्थापत्तिरित्यतोऽस्यान्यथोपपत्तिमाह॥ भगवत इति॥ साम्यं निर्विकारत्वम्। भक्तानामपराधं भगवान् न गणयतीत्येतत् कुत इत्यत आह॥ नेति॥

द्वेषस्य मुक्तिसाधनत्वाभावे भावो यथाकथञ्चिच्चिन्तनं भावस्य मोक्षस्य कारणमित्यादिवचनविरोधः स्यादित्यत आह॥ न चेति॥ कुतो नेत्यत आह॥ द्वेपेति॥ हि यस्मादेतत् वचनमित्ति युक्तं घटनोपेतं तस्मादित्यर्थः। यथोक्तम्—

"यादृशी भावना ज्ञेया सिद्धिर्भवति तादृशी"।

इति। प्रतीत एवार्थः किं न स्यादित्यत आह॥ अन्यथेति॥ भगवद्द्वेषिणो मुक्तिभाजस्तदाकृतधीत्वात् भगवद्भक्तवदित्यनुमानविरोध इत्यत आह॥ न चेति॥ उभयोराकृतधीत्वे सति फलेऽप्यविशेष इति च नेत्यर्थः। कुत इत्यतः कालातीतत्वादित्याह॥ तेपामेवेति॥ आकृतधीनामेव। विवक्षुः वेक्ष्यतीति सम्भावनाविषयः। आशङ्कायामचेतनेषूपसङ्ख्यानात्। मह्यं मम। ननु वचनत्वाविशेषात् यो द्विष्यादित्यादिभिः "द्वेषाच्चैद्य" इत्यादीनां कथं बाधनमित्यत

1. ख. पार्थिव

आह ॥ बह्विति ॥ निषेधो द्वेषस्य मुक्तिसाधनतायाः । न केवलं बहुत्वाबहुत्वरूपोऽनयोर्विशेषः । किं तु स्वव्याहतत्वास्वव्याहतत्व-रूपोऽपीत्याह ॥ यस्मिन्निति ॥ भागवतादौ ग्रन्थे भगवन्निन्दयेत्यादि-र्निषेधः । भगवद्गुणोत्कर्ष एव सर्ववेदानां यन्महातात्पर्यं तद्विरोधो द्वेषान्मुक्तिवाचिनाम् । इतरेषां तु तदानुकूल्यमिति च विशेष इति भावेनाह ॥ महातात्पर्येति ॥ उक्तः उक्तप्रायः ।

इतोऽपि बाध्यबाधकभावो युक्त इति भावेन व्याप्तिं तावदाह ॥ अयुक्तिमद्भ्य इति ॥ सप्तम्यर्थे मतुप् । ततः किमित्यत आह ॥ युक्तयश्चेति ॥ महातात्पर्यविरोधश्चेत्यपेक्षया । अन्येषाम[1]नुकूलाः । अव्ययं विबुधश्रेष्ठम् । पुष्करविष्टराद्य इति । सावकाशत्वनिरवकाशत्व-विशेषाच्चैवमित्याह ॥ न चेति ॥ इतरेषां तूक्तैवेति शेषः । इतश्च बाध्यबाधकभावो युक्त इत्यभिप्रेत्य व्याप्तिं तावदाह ॥ साम्येऽपीति ॥ गुणान्तरेण । साम्येऽपीति कैमुत्यार्थम् । लोकानुकूलशब्देन लोक-दृष्टव्याप्तिकानुमानानुकूलत्वमुच्यते । ततः किमित्यत आह ॥ लोकेति ॥ इतरत् द्वेषिप्रियत्वं, भगवत्प्रीत्यैव मोक्ष इति तु प्रसिद्धमेव । शिशुपालादीनां पूर्वभक्तत्वं प्रसिद्धमित्युक्तम् । तत् कथमिति चेत् पार्षदत्वात् । वचनाच्चेत्याह ॥ उक्तं चेति ॥ त्रयाणां लोकानामधीशे संरम्भेण मार्गमात्रेणाभिनिविष्टचित्तान् । उपसंहरति ॥ अत इति ॥ गतिः सद्गतिः । स्वमौढ्यादेव मामवजानन्ति । न मद्दोषात् । तेषां च महाननर्थ इति सर्वं समाहितम् । "राक्षसीं" इत्यादि तु किमर्थमित्यत आह ॥ द्वेषेति ॥ मौढ्यान्मिथ्याज्ञानं भवतु । प्रज्वल-नात्मको द्वेषस्तु कुत इत्याशङ्कानिवृत्त्यर्थमिति शेषः । अन्येषामविद्य-मानं मौढ्यमेव तेषां कुत इत्याशङ्कानिवृत्त्यर्थमिति वा । अत्र कारण-मिति मूलकारणम् ॥ १२ ॥

1. क. 'अन्येषां' इत्यतः परं 'युक्तयः' इत्यधिकः पाठः

भ० गी०—

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥

भा०—

नेतरे द्विषन्तीति दर्शयितुं देवानाह ॥ महात्मान इति ॥ १३ ॥ १४ ॥

प्र० दी०—

ननु कुतोऽयं विवेक इत्याकाङ्क्षायां राक्षसादिभ्य इतरे न द्विषन्तीत्येतावदेव वक्तव्यम् । भजन्तीत्यादि तु व्यर्थमित्यत आह ॥ नेतर इति ॥ सत्यमेतत् । तथापि देवानां स्वरूपकथनार्थमेतत् । तच्च द्वेषाभावोपपादनार्थमिति भावः । देवानित्युत्तमजीवोपलक्षणम् ॥ १३ ॥ १४ ॥

भ० गी०—

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखम् ॥ १५ ॥

भा०—

सर्वत्रैक एव नारायणः स्थित इत्येकत्वेन । पृथक्त्वेन सर्वतो वैलक्षण्येन ।

बहुधा हि तस्य रूपमाभाति । "शुक्लमिव लोहितमिव
अथो नीलमथोऽर्जुनम्" ॥

इति सनत्सुजाते । "दैवमेवापरे" इत्युक्तप्रकारेण बहवो वा बहुधा ॥ १५ ॥

प्र० दी०—

"एकत्वेनाद्वैतभावनया" इति व्याख्यानमसत्। मिथ्याभावनत्वादिति भावेनाह ॥ सर्वत्रेति ॥ सर्वत्र स्थितो नारायण एक एवेति योजना। "पृथक्त्वेनादित्यचन्द्रादिरूपेण" इत्यसदिति भावेनाह ॥ पृथक्त्वेनेति ॥ अपरस्तु 'पृथक्त्वेन' इत्येतत् सम्यक् व्याख्याय "बहुधा" इत्येतत् 'आदित्यादिरूपेण' इति व्याख्यातवान्। अत आह ॥ बहुधेति ॥ कथमित्यत आगमेनैव दर्शयति ॥ शुक्लमिवेति ॥ इवशब्दोऽप्यर्थः। प्रकारान्तरेण व्याख्याति ॥ दैवमेवेति ॥ १५ ॥

भ० गी०—

अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम्।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥
पिताऽहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च ॥ १७ ॥

भा०—

प्रतिज्ञातं विज्ञानमाह ॥ अहं क्रतुरित्यादिना ॥ क्रतवोऽग्निष्टोमादयः। यज्ञः देवतामुद्दिश्य द्रव्यपरित्यागः।

"उद्दिश्य देवान् द्रव्याणां त्यागो यज्ञ इतीरितः"।

इत्यभिधानात् ॥ १६ ॥ १७ ॥

प्र० दी०—

"विश्वतो मुखं" इत्युक्तं सर्वात्मकत्वं प्रपञ्चयत्युत्तरेणेत्यन्यथाव्याख्याननिरासार्थमाह ॥ प्रतिज्ञातमिति ॥ अन्यथा प्रतिज्ञाताऽनुक्तिप्रसङ्ग इति भावः। व्याख्यानं तु "रसोऽहं" इत्यादेरिव द्रष्टव्यम्। क्रतव इति क्रतुयज्ञशब्दयोरर्थभेदमाह। सामान्यविशेषभावेन भेद इत्यर्थः ॥ १६ ॥ १७ ॥

भ० गी०—

गतिर्भर्ता प्रभुस्साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयस्स्थानं निधानं बीजमव्ययम् ॥ १८ ॥

भा०—

गम्यते मुमुक्षुभिरिति गतिः। तथा हि सामवेदे वसिष्ठ-शाखायाम्—“अथ कस्मादुच्यते गतिरिति ब्रह्मैव गतिरिति तद्धि गम्यते पापविमुक्तैः” इति। साक्षादीक्षत इति साक्षी। तथा हि बाष्कलशाखायाम्—

“स साक्षादिदमद्राक्षीत्, यदद्राक्षीत् तत् साक्षिणः साक्षित्वम्” इति।

शरणमाश्रयः संसारभीतस्य। परं परायणं[1] इत्याद्युक्तम्।

“नारायणं महाज्ञेयं विश्वात्मानं परायणम्”।

इति च। संसारकाले प्रकृत्या जगदत्र निधीयत इति निधानम्। तथा हि ऋग्वेदखिलेषु—

“अपश्यमप्यये मायया विश्वकर्मण्यदो जगन्निहितं शुभ्रचक्षुः”।

इति ॥ १८ ॥

प्र० दी०—

“गतिः कर्मफलं” इति व्याख्यानमपाकर्तुमाह ॥ गम्यत इति ॥ शरणमित्यतो भेदार्थमुक्तम् ॥ मुमुक्षुभिरिति ॥ अत एव गम्यत इत्यस्यावगम्यत इत्यर्थः। कुत एतदित्यत आह ॥ तथा हीति ॥ “किमुच्यते” इत्यपि प्रश्नोऽध्याहार्यः। “साक्षी” इत्यौदासीन्यं प्रतीयते। अत आह ॥ साक्षादिति ॥ कुत एतदित्यत आह ॥ तथा हीति ॥ यदद्राक्षीत् साक्षात् तत् साक्षिणः परमेश्वरस्य

1. अ. परमं यः परायणं इति हि उक्तम्

साक्षित्वं साक्षिशब्दप्रवृत्तिनिमित्तम् । तदुक्तं—"साक्षात् द्रष्टरि संज्ञायाम्" इति । निवासशब्दागतार्थतया शरणशब्दार्थमाह ॥ शरणमिति ॥ "संसारभीतस्य" इति मुक्तोपलक्षणम् । विष्णोर्मुक्ताश्रयत्वे प्रमाणमाह ॥ परमिति[1] ॥ परायणं मुक्तानामाश्रयः । तथाऽपि निधानमिति पुनरुक्तिरित्यत आह ॥ संसारेति ॥ "सर्वभूतानि प्रकृतिं यान्ति" इत्युक्तत्वात् कथं भगवति निधीयन्त इत्यत उक्तम् ॥ प्रकृत्येति ॥ प्रथमं प्रकृतिं यान्ति पश्चात् तत्र निधीयन्त इत्यर्थः । तत्कुत इत्यत आह ॥ तथा हीति ॥ विश्वकर्मणीश्वरे, शुभ्रचक्षुः शुद्धदृष्टिरहम् ॥ १८ ॥

भ० गी०—

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥

भा०—

सत् कार्यम् । असत् कारणम् ।

"सदभिव्यक्तरूपत्वात् कार्यमित्युच्यते बुधैः ।
असदव्यक्तरूपत्वात् कारणं चापि शब्दितम्" ॥

इति ह्यभिधानम् । "असच्च सच्चैव यद् विश्वं सदसतः परं" इति च भारते ॥ १९ ॥

प्र० दी०—

असतो नियम्यत्वानुपपत्तेः "सदसच्चाहं" इत्युक्तमित्यत आह ॥ सदिति ॥ कार्यं सदित्युच्यते । अभिव्यक्तिरूपत्वादित्यनेन सदेः गत्यर्थस्य क्विपि कर्मणि रूपमेतदित्युच्यते । कारणमपि अव्यक्तरूपत्वादेवासच्छब्दितम् । कार्यकारणयोः सदसच्छब्दप्रयोगं च दर्शयति ॥ असच्चेति ॥ तस्मात् सदसतोर्विश्वस्मात् ब्रह्म परम् ॥ १९ ॥

---

1. ख. परममिति

भ० गी०—

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान् दिवि देवभोगान् ॥२०॥
ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २१ ॥

भा०—

तथापि मद्भजनमेवान्यदेवताभजनाद्वरमिति दर्शयति ॥ त्रैविद्या इत्यादिना ॥ २० ॥ २१ ॥

प्र० दी०—

"सदसच्चाहमर्जुन" इति विज्ञानस्योपसंहृतत्वादुत्तरस्यासङ्गतिमाशङ्क्याह ॥ तथाऽपीति ॥ "अहं क्रतुः" इत्यादिना सर्वक्रत्वादिभोक्तृत्वं यदुक्तं भगवतस्तदसदिति वक्ष्यामीति गूढाभिसन्धिना 'यदि सर्वत्र भोक्ता भगवान् तर्हि किं भागवतानां त्रैविद्यानां च फलसाम्यमेव' इति पृष्टस्येदमुत्तरमित्याशयः । तथाऽपि सर्वत्र भगवतः भोक्तृत्वेऽपि मद्भजनं भागवतैरनुष्ठितम् । 'देवता' इति पित्राद्युपलक्षणम् । त्रैविद्याद्यनुष्ठितात् वरमुत्कृष्टफलम् । इत्यादिना श्लोकत्रयेण ॥ २० ॥ २१ ॥

भ० गी०—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥२२॥

भा०—

अनन्या अन्यदचिन्तयित्वा । तथा हि गौतमखिलेषु—

"सर्वं परित्यज्य मनोगतं यद्विना देवं
केवलं शुद्धमाद्यम् ।
ये चिन्तयन्तीह तमेव धीरा अनन्यास्ते
देवमेवाविशन्ति" ॥

इति ।

"कामं कालेन महतैकान्तित्वात् समाहितैः ।
शक्यो द्रष्टुं स भगवान् प्रभासंदृश्यमण्डलः" ॥

इति मोक्षधर्मे । नित्यमभितः सर्वतो युक्तानाम् ॥ २२ ॥

प्र० दी०—

अद्वैतज्ञानिनो अनन्या इति प्रतीतिनिरासार्थमाह ॥ अनन्या इति ॥ अविद्यमानमन्यत् येषां ते अनन्याः । तच्च "अनन्याश्चिन्तयन्तो मां" इति प्रसङ्गाच्चिन्तनीयमिति लब्धेऽन्यदचिन्तयित्वेति सिध्यति । प्रतीत एवार्थः किं न स्यादित्यत आह ॥ तथा हीति ॥ "देवमेवाविशन्ति" इत्यनेन "योगक्षेमं वहाम्यहं" इत्युक्तार्थं भवति । अत्रैव "कामं" इत्यागमान्तरम् । प्रभया संदृश्यं मण्डलं स्वरूपं यस्यासौ तथोक्तः । दर्शनस्य योगक्षेमसाधनत्वं प्रसिद्धमेव । "नित्याभियुक्तानां" इत्यस्य "अपवादविषयाणां" इत्यन्यथाप्रतीतिनिरासार्थमाह ॥ नित्यमिति ॥ सर्वतः सर्वस्मिन् देशे । शरीरेन्द्रियमनोभिर्वा युक्तानां भगवति सेवोद्युक्तानाम् ॥ २२ ॥

भ० गी०—

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥

भा०—

तर्ह्यहं क्रतुरित्याद्यसत्यमित्यत आह ॥ येऽपीति ॥ २३ ॥

प्र० दी०—

उक्तप्रश्नस्योत्तरं जातम् । तत् किमुत्तरेणेत्यतः प्रश्नाभिसन्ध्युद्घाटनस्येदमुत्तरमित्याह ॥ तर्हीति ॥ भगवद्भोगनिमित्तं हि फलम् । स चेत् सर्वत्र समः तदा सर्वेषां फलसाम्येन भाव्यम् । तदभावश्चेत्तर्हि "अहं क्रतुः" इत्युक्तं सर्वत्र भगवतः भोक्तृत्वमप्यसत्यमित्यर्थः ॥ २३ ॥

भ० गी०—

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥

भा०—

कारणमाह विधिपूर्वकत्वे ॥ अहं हीति ॥ २४ ॥

प्र० दी०—

"अहं क्रतुः" इत्यादिनोक्तत्वात् "अहं हि" इति पुनरुक्तिरित्यत आह ॥ कारणमिति ॥ त्रैविद्यादिकृतानां यज्ञानां भगवांश्चेत् भोक्ता कथं तर्ह्यविधिपूर्वकत्वमिति शङ्कायामिति शेषः ॥ २४ ॥

भ० गी०—

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि
माम् ॥ २५ ॥

भा०—

फलं विविच्याह ॥ यान्तीति ॥ २५ ॥

प्र० दी०—

"ते पुण्यमासाद्य" इति "योगक्षेमं वहाम्यहं" इति च फलभेदस्योक्तत्वात् किं "यान्ति" इत्यादिनेत्यत आह ॥ फलमिति ॥ तस्यैवायं प्रपञ्च इति भावः ॥ २५ ॥

भ० गी०—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥

भा०—

दुर्बलैस्त्वं पूजयितुमशक्यो महत्त्वादित्याशङ्क्याह ॥ पत्र-मिति ॥ न त्वविहितपत्रादि । तस्यापराधत्वोक्तेर्वाराहादौ । भक्त्यैवाहं तृप्य[1] इति भावः।

"भक्तप्रियं सकललोकनमस्कृतं च"

इति भारते।

एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः।
एकान्तभक्तिर्गोविन्दे यत् सर्वत्रात्मदर्शनम्[2] ॥ २६ ॥

प्र० दी०—

"पत्रं" इत्यस्य सङ्गत्यप्रतीतेराह ॥ दुर्बलैरिति ॥ अतस्तद्भजनस्य महाफलत्वेऽपि तद्विहायाल्पानां देवानां[3] भजनमल्पफलमपि सुशकत्वात् करोमीति प्रासङ्गिकशङ्काशेषः। साधनानादरस्योक्तत्वात् यत्किञ्चित् पत्रादिकमिति न मन्तव्यमित्याह ॥ न त्विति ॥ तत् किं किमपि भगवते समर्पणीयमेवेति नियमोऽत्राभिप्रेत इत्यत आह ॥ भक्त्यैवेति ॥ कुत इत्यत आह ॥ भक्तेति ॥ स्वार्थः स्वार्थसाधनो-पायः ॥ २६ ॥

भ० गी०—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥

---

1. अ. तुष्ट 2. अ. सर्वत्रात्मदर्शनम् इत्यतः परं इति भागवते इति पाठः
3. क. ख. देवादीनां

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥**

भा०—

अतो यत् करोषि ॥ २७ ॥ २८ ॥

प्र० दी०—

आत्मनो गोविन्दस्यासाधनानादरस्य पूर्वमेवोक्तत्वात् व्यर्थमुत्तरमित्यत आह ॥ अत इति ॥ सामान्यमुक्त्वा विशेषे निगमनमेतदिति भावः ॥ २७ ॥ २८ ॥

भ० गी०—

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥**

भा०—

तर्हि स्नेहादिमत्त्वादल्पभक्तस्यापि कस्यचित् बहुफलं ददासि । विपरीतस्यापि कस्यचित् विपरीतमित्यत आह ॥ **समोऽहमिति ॥** तर्हि न भक्तिप्रयोजनमित्यत आह ॥ **ये भजन्तीति ॥ मयि ते तेषु चाप्यहमिति ॥** मम ते वशाः तेषामहं वश इति । उक्तं च पैङ्गिखिलेषु—

"ये वै भजन्ते परमं पुमांसं तेषां वशस्स तु ते मद्वशाश्च[1] "

इति । तद्वशा एव ते सर्वदा । तथाऽपि बुद्धिपूर्वाबुद्धिपूर्वकत्वेन भेदः । उद्धवादिवत् शिशुपालादिवच्च । तच्चोक्तं तत्रैव—

"अबुद्धिपूर्वाद्यो वशस्तस्य ध्यानात् पुनर्वशो भवते बुद्धिपूर्वम्"

इति ॥ २९ ॥

---

1. अ. तद्वशाश्च

प्र० दी०—

भक्तप्रियत्वमुक्त्वा तद्विरुद्धं सर्वत्र साम्यं कथमुच्यत इत्यत आह ॥ तर्हीति ॥ यदि त्वं भक्तप्रियस्तदा द्वेष्यप्रियश्च स्याः। ततश्च भक्तेषु द्वेषिषु यथासङ्ख्यं स्नेहद्वेषवत्त्वादल्पभक्तस्यापि कस्यचित् बहुफलं सुखरूपं ददासि। विपरीतस्याल्पद्वेषिणोऽपि कस्यचित् बहुफलं दुःखरूपं ददासीत्याद्यापाद्यते। राजादिषु तथा दर्शनात्। तथा च वैषम्यनैर्घृण्ये तवेति शङ्कार्थः। पूर्वार्धेनैव शङ्कायाः परिहृतत्वात् किमुत्तरार्धेनेत्यत आह॥ तर्हीति॥ अहं हि सर्वभूतेषु समो न वैषम्यादिमान् यतो मे तदीयं द्वेषमपेक्ष्याधिकं द्वेष्यो नास्ति। तदीयां भक्तिमपेक्ष्याधिकं प्रियश्च नास्तीति भगवतोक्तेऽपि विपरीतमर्थं गृहीत्वा शङ्कते। यदि ते प्रियो नास्ति तर्हि न भक्तिः प्रयोजनं फलस्य। तथा चोक्तविरोध इति भावः। "मयि ते तेषु चाप्यहं" इत्येतन्न फलं स्वभावसिद्धत्वादित्यत आह॥ मयीति॥ इत्यस्येत्यर्थ इति योजना। कुत एतदित्यत आह॥ उक्तं चेति॥ "मम ते वशाः" इत्येतदपि तादृगेव भजनाभावेऽपि तद्वशत्वस्वाभाव्यादित्यत आह॥ तदिति॥ यद्यपीति शेषः। अत्र दृष्टान्तं प्रमाणं चाह॥ उद्धवादीति॥ अबुद्धिपूर्वं यो वशस्सः॥ २९॥

भ० गी०—

अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः ॥३०

भा०—

न भवत्येव प्रायस्तद्भक्तः सुदुराचारः[1]। तथापि बहुपुण्येन यदि कथञ्चित् भवति तर्हि साधुरेव स मन्तव्यः॥ ३०॥

प्र० दी०—

"अपि चेत्" इत्यादिना भक्तेः प्रशंसा क्रियते। तत्र विष्णु-

1. अ. दुराचारः

भक्तेस्सुदुराचारेणैकत्र समावेशप्रतीतौ यथावद्व्याचष्टे ॥ न भवत्येवेति ॥ ३० ॥

भ० गी०—

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥३१॥

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्
॥ ३२ ॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥३३॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥

॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

भा०—

कुतः ? क्षिप्रं भवति धर्मात्मा । देवदेवांशादिष्वेव च तद्भवति । उक्तं च शाण्डिल्यशाखायाम्—

"नाविरतो दुश्चरितान्नाभक्तो नासमाहितः ।
सम्यग् भक्तो भवेत् कश्चित् वासुदेवेऽमलाशयः ।
देवर्षयस्तदंशाश्च भवन्ति क्व च ज्ञानतः" ॥

इति । अतोऽन्यः कश्चित् भवति चेत् डाम्भिकत्वेन सोऽनुमेयः । साधारणपापानां सत्सङ्गात् महत्यपि कथञ्चिद्भक्तिर्भवति । साधारणभक्तिर्वेतरेषाम् ।

"स[1] शठमतिरुपधाति योऽर्थतृष्णां तमधमचेष्टमवैहि
नास्य भक्तिः[2]"।

इति श्रीविष्णुपुराणे।

"सा श्रद्धधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः"

इति च।

"वेदास्त्वधीता मम लोकनाथ
तप्तं तपो नानृतमुक्तपूर्वम्।
पूजां गुरूणां सततं करोमि
परस्य गुह्यं न च भिन्नपूर्वम्।
गुप्तानि चत्वारि यथाऽऽगमं
मे शत्रौ च मित्रे च समोऽस्मि नित्यम्।
तं चापि देवं शरणं प्रपन्नं[3]
एकान्तभावेन भजाम्यजस्रम्।
एतैरुपायैः[4] परिशुद्धसत्वः
कस्मान्न पश्येयमनन्तमेनम्॥"

इति मोक्षधर्मे। आचारस्य ज्ञानसाधनत्वोक्तेश्च ज्ञानाभावे सम्यग्भक्त्यभावात्। तथा हि गौतमखिलेषु—

"विना ज्ञानं कुतो भक्तिः कुतो भक्तिं विना च तत्"

इति।

"भक्तिः परे स्वेऽनुभवो विरक्तिरन्यत्र चैतत्
त्रिकमेककालम्।"

इति च भागवते॥ ३१॥ ३२॥ ३३॥ ३४॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये नवमोऽध्यायः॥ ९॥

---

1. अ. 'सः' इति न पठ्यते 2. अ. भक्तम्
3. क. प्रपन्नः 4. क. विशेषैः

प्र० दी०—

बहुपुण्येन स्वयोग्यादधिकेनार्जितेन सम्यग्व्यवसितो हि स इति हेतोरुक्तत्वात् "क्षिप्रं" इत्यादि व्यर्थमित्यत आह॥ कुत इति॥ सम्यग्व्यवसायत्वेऽपि सुदुराचारः कुतस्साधुर्मन्तव्य इति शङ्कार्थः। सम्यग्व्यवसायवत्त्वात् क्षिप्रं भवति धर्मचित्तः। यदेतद्भक्तेः सुदुराचारेण सहैकत्र क्वचिदवस्थानमङ्गीकृतं तदपि न मनुष्यविषयमित्याह॥ देवेति॥ देवाश्चेन्द्रादयस्तदंशाः सुग्रीवादयः। आदिपदेन विश्वामित्रादीनां ऋषीणां ग्रहणम्। एतच्च देवदेवांशादिष्वेव विषयेषु भवतीति योजना। कुत इत्यत आह॥ उक्तं चेति॥ दुश्चरितादविरतो यः कश्चित् सोऽमलाशयो भूत्वा वासुदेवे सम्यग्भक्तो न भवेत्। तथाऽभक्तः, श्रवणकीर्तनादिभक्तिलिङ्गरहितः। एवमसमाहितो विषयविक्षिप्तमनाश्च। देवादयश्च क्वचिदेवंभूता अपि सम्यग्भक्ता भवन्ति। कुतः ज्ञानतः सम्यग्व्यवसायवत्त्वात्। ननु देवादिभ्योऽन्योऽपि सुदुराचारस्तद्भक्तो दृश्यते। शङ्खचक्राङ्कितबाहुमूलत्वादिलिङ्गवत्त्वात्, तत्कथमेतदित्यत आह॥ अतोऽन्य इति॥ भवति चेत् सुदुराचारोऽपि भक्तिलिङ्गवानिति शेषः। मा भूत् सुदुराचारो भक्तः। मध्यमदुराचारस्तु तथाविधः कथमित्यत आह॥ साधारणेति॥ महतीति वक्ष्यमाणसाधारणभक्तिव्यवच्छेदार्थम्। सुदुराचाराणामपि भगवत्प्रेम्णोऽनुभवसिद्धत्वात् कथं डाम्भिकत्वानुमानमित्यत आह॥ साधारणेति॥ अल्पेत्यर्थः। प्रेमानुभवाभावेऽनुमानमुक्तम्। महाभक्त्यभावविषयं वेति भावः। सुदुराचारोऽपि भक्तिलिङ्गान्महाभक्त एवास्तु। किं डाम्भिकत्वादिकल्पनयेत्यत आह॥ स इति॥ शठमतिर्डम्भबुद्धिः। महाभक्तेः दुराचारोपशमहेतुत्वोक्तेश्च न तयोरेकत्र समावेश इत्याह॥ सेति॥ हरिभक्तिः। इतश्चैवमित्याह॥ वेदा इति॥ मम मया परस्य गुह्यं न च भिन्नपूर्वं पिशुनत्वं नाऽचरितम्। उपस्थमुदरं पाणिः वाक् इति चत्वारि। मे मया। एकान्तभावेन नियतमनसा। सत्वमन्तःकरणम्। कारणसामग्र्यां सत्यां कार्यानुदयो ह्याश्चर्यहेतुः। नन्वाचारस्य ज्ञानसाधनत्वोक्त्या दुराचाराणां ज्ञाना-

*

भावः सिध्यतु। महाभक्त्यभावस्तु कुत इत्यत आह॥ ज्ञानेति॥ कुत एतदित्यत आह॥ तथा हीति॥ भक्तिज्ञानयोरविनाभूतत्वाच्च तदभावे तदभावसिद्धिरित्याह॥ भक्तिरिति॥॥ ३१॥ ३२॥ ३३॥ ३४॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां नवमोऽध्यायः समाप्तः॥ ९॥

---

# ॥ अथ दशमोऽध्यायः ॥

भा०—

॥ हरिः ॐ ॥ उपासनार्थं विभूतीर्विशेषकारणत्वं च केषाञ्चिदनेनाध्यायेनाह ॥

प्र० दी०—

प्रकृतसङ्गतत्वेनाध्यायप्रतिपाद्यं दर्शयति ॥ उपासनार्थमिति ॥ षष्ठे ध्यानमुक्तम्। तन्नवमान्ते "मन्मना भव" इति स्मारितम्। तच्च ध्येयसापेक्षम्। विशिष्टाधिकारिणां च भगवद्विभूतय[1] उपास्याः। अतस्ता आहानेन दशमाध्यायेन। तत्राऽऽदौ केषाञ्चित् बुद्ध्यादीनां महर्ष्यादीनां च विशेषकारणत्वमपि भगवत आहेत्यर्थः। विभूतिशब्दार्थस्तात्पर्यनिर्णयेऽभिहितः। तदुक्तेर्भूयस्त्वात् प्रथममुपादानम्। अत एवैकवाक्यता। ननु विभूतयो "रसोऽहं" इत्यादिनोक्ता एव। सत्यम्। अत एव विस्तरेणाऽऽत्मन इति वक्ष्यति। विशेषकारणत्वं नाम सामर्थ्यातिशयोपेततया निर्माणम्।

भ० गी०—

श्रीभगवानुवाच—

भूय एव महाबाहो शृणु मे परमं वचः।
यत्तेऽहं प्रियमाणाय वक्ष्यामि हितकाम्यया ॥१॥

भा०—

प्रियमाणाय श्रुत्वा[2] सन्तोषं प्राप्नुवते ॥ १ ॥

प्र० दी०—

प्राक् "शोकसंविग्नमानसः" इत्युक्तम्। तद्विरुद्धं कथं "प्रियमाणाय" इत्युच्यत इत्यतो व्याचष्टे ॥ प्रियमाणायेति ॥ पूर्वं बन्धु-

---

1. क. ख. भगवद्विभूतय एव
2. अ. 'श्रुत्वा' इति न पाठः

स्नेहाच्छ्लोक उक्तः। इदानीं भगवद्वचनश्रवणनिमित्ता सन्तोषप्राप्तिः श्रोतृत्वसम्पत्प्रतिपादनायोच्यत इति न विरोध इति भावः ॥ १ ॥

भ० गी०—

न मे विदुस्सुरगणाः प्रभवं न महर्षयः।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

भा०—

प्रभवं प्रभावम्। मदीयां जगदुत्पत्तिं वा। तद्वशत्वात्तस्येत्युच्यते। यद्यस्ति तर्हि देवादयोऽपि[1] जानन्ति सर्वज्ञत्वादतो नास्तीति भावः। "अहमादिर्हि" इति तु उत्पत्तिरपि यस्य वशा कुतस्तस्य जनिरिति ज्ञापनार्थम्। "अहं सर्वस्य जगतः प्रभवः प्रलयः" इति चोक्तम्। उक्तं चैतत्सर्वमन्यत्रापि।

"को अद्धा वेद क इह प्रावोचत् कुत आजाता
कुत इयं विसृष्टिः।
अर्वाग् देवा अस्य विसर्जनेन अथ को वेद यत
आ बभूव" इति।
"न तत्प्रभावं ऋषयश्च देवा विदुः कुतोऽन्येऽ-
ल्पधृतिप्रमाणाः।"

इति ऋग्वेदखिलेषु। अन्यस्त्वर्थो "यो मामजं" इति वाक्यादेव ज्ञायते ॥ २ ॥

प्र० दी०—

प्रभवशब्दः केनचित् सामर्थ्यमात्रवाचित्वेन व्याख्यातः। अन्येन तु भगवदुत्पत्तिवाचित्वेन। तदुभयमङ्गीकुर्वन्नधिकमपि विवक्षुराह ॥ प्रभवमिति ॥ मदीयामुत्पत्तिमिति सम्बन्धः। जगदुत्पत्तिः "मे" इति कथं विशेष्यत इत्यत आह ॥ तदिति ॥ जगदुत्पत्तिरिति वर्तते।

1. अ. अपि इति न पठ्यते

एवं तर्हि भगवत्प्रभाववत् जगदुत्पत्तिवच्च भगवदुत्पत्तिरस्त्येव। किं तु दुर्ज्ञाना एवेत्यापन्नमित्यत आह॥ यदीति॥ भगवदुत्पत्तिरिति शेषः। सर्वज्ञत्वात्सामान्यत इति शेषः। ततः परं "न च सामान्यतोऽपि जानन्ति" इत्यध्याहारः। अतः सर्वथा अनुपलम्भात्। प्रभावादिकं तु विशेषत एव न जानन्ति न तु सामान्यतोऽपीति भावः। ननु भगवदुत्पत्तेरभावश्चेदत्राभिप्रेतस्तदा "अहमादिर्हि" इति हेतुवचनं न सङ्गच्छते। अत्र हि देवादयो अर्वाक्तना मया सृष्टाः कथं पूर्वतनीमुत्पत्तिं जानीयुरिति प्रतीयत इत्यत आह॥ अहमिति॥ अपिशब्दोऽध्याहृतेन "सर्वस्य" इत्यनेन सम्बध्यते। कुतो जनकात्। नन्वत्र सर्वस्याप्युत्पत्तिः भगवदधीनेति नोच्यते। किं तु देवादीनामेव। तत्कथमनेन कारणाभावः सिध्यतीति चेन्न। देवाऽदिशब्दस्योपलक्षणार्थत्वात्। तत्कुत इत्यत आह॥ अहमिति॥ उक्तमर्थत्रयमुपपादयति॥ उक्तं चेति॥ इयं विसृष्टिः विविधा जगत्सृष्टिः कुतः कारणात् आ जाता इति कः पुरुषः कुतः प्रमाणात् अद्धा वेद कश्च इह लोके प्रावोचत्। न कोऽपि कुतश्चित्। यतो देवा अस्य ईश्वरस्य विसर्जनेन निष्पन्ना अर्वाचीनाः। सर्वथाऽज्ञाने तदभावः स्यादित्यत उक्तं अथ अन्यत् यतो यस्मात् इयं आ बभूव स कः प्रजापतिः भगवान् अद्धा वेद इत्यर्थः। न तत् प्रभावं इत्यत्र अद्धा इति द्रष्टव्यम्। अत एव व्युत्क्रमः। प्रमाणं प्रमा। अन्यस्त्वर्थो भगवतः जन्माभावः॥ २॥

भ० गी०—

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते॥ ३॥**

भा०—

अनः चेष्टयिता आदिश्च सर्वस्य इति 'अनादिः'। अजत्वेन सिद्धेः इतरस्य॥ ३॥

प्र० दी०—

अजशब्दागतार्थतया अनादिशब्दं व्याचष्टे ॥ अन इति ॥ सर्वस्येत्युभयशेषः । अन्तर्णीतण्यर्थादनतेः पचाद्यच् । न विद्यते आदिः कारणमस्येत्यनादिरित्यन्ये । तदसत् । आर्थिकपुनरुक्तेरपरिहारादित्याह ॥ अजत्वेनेति ॥ इतरस्य कारणरहितस्य । अजत्वे हेतुरयमुच्यत इति चेत् । मैवम् । तज्ज्ञापकविभक्त्याद्यभावात् । गत्यन्तराभावे हि गमनिकैषा । चेट्कत्वं प्रागनुक्तं कथमनूद्यत इति चेन्न । प्रभावे सर्वस्यान्तर्भावात् ॥ ३ ॥

भ० गी०—

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवो भावो भयं चाभयमेव च ॥४॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥५॥

भा०—

तत्प्रथयति ॥ बुद्धिरित्यादिना ॥ कार्याकार्यविनिश्चयो बुद्धिः । ज्ञानं प्रतीतिः ।

"ज्ञानं प्रतीतिर्बुद्धिस्तु कार्याकार्यविनिश्चयः" ।

इति ह्यभिधानम् । दम इन्द्रियनिग्रहः । शमः परमात्मनि निष्ठा ।

"शमो मन्निष्ठता बुद्धेः दम इन्द्रियनिग्रहः" ।

इति भागवते । तुष्टिरलम्बुद्धिः । "अलम्बुद्धिस्तथा तुष्टिः" इत्यभिधानात् ॥ ४ ॥ ५ ॥

प्र० दी०—

तर्हि "आदिम्" इत्यनेन "बुद्धिः" इत्यादिकं गतार्थमित्यत आह ॥ तदिति ॥ सर्वादित्वं । "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरं" इति गौतमवचनात् "बुद्धिर्ज्ञानं" इति पुनरुक्तिरित्यत आह ॥ कार्येति ॥

कुत एतदित्यत आह ॥ ज्ञानमिति ॥ ज्ञायते अनेनेति ज्ञानं शास्त्र-मित्यसत् । आध्यात्मिकधर्मप्रसङ्गात् । दमो बाह्येन्द्रियोपशमः[1], शमोऽन्तःकरणस्येति कश्चित् । तदसत् । एकेनैव शब्देन सिद्धत्वात् । किं तु दमः क्रियासु विनयः । शमो बाह्यान्तःकरणसंयम इत्यपरः । तदप्यसदिति भावेनाह ॥ दम इति ॥ कुत इत्यत आह ॥ शम इति ॥ सुखशब्दागतार्थतया तुष्टिशब्दं सप्रमाणकं व्याचष्टे ॥ तुष्टिरिति ॥ ॥ ४ ॥ ५ ॥

**भ० गी०—**

> **महर्षयस्सप्तपूर्वे चत्वारो मनवस्तथा ।**
> **मद्भावा मानसा जाता येषां लोक इमाः प्रजाः**
> **॥ ६ ॥**
>
> **एतां विभूतिं योगं च मम यो वेत्ति तत्वतः ।**
> **सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥७॥**

**भा०—**

पूर्वे सप्तर्षयः ।

> "मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
> वशिष्ठश्च महातेजाः" ।

इति मोक्षधर्मोक्ताः । ते हि सर्वपुराणेषूच्यन्ते । चत्वारः प्रथमाः स्वायम्भुवाद्याः । तेषां हि इमाः प्रजाः । न हि भविष्यतां इमाः प्रजा इति युक्तम् । विभागः प्राधान्यं च प्राथमिकत्वादेव भवति । गौतमखिलेषु चोक्तम्—

"स्वायंभुवं रोचिषं[2] रैवतं च तथोत्तमम् । वेद यः स प्रजावान्" इति । पूर्वेभ्यो ह्युत्तरो जायन्त इत्येषां प्राधान्यम् ।

---

1. क. बाह्येन्द्रियोपरमः 1. अ. स्वारोचिषम् ।

अजातेषु ज्यैष्ठ्यम्। तापसस्य भगवदवतारत्वादमुक्तिः। तच्च भागवते प्रसिद्धम्। मानसत्वं च सर्वेषां मनूनामुक्तं भागवते—

"ततो मनून् ससर्जान्ते मनसा लोकभावनान्"

इति। अन्यपुत्रत्वं त्वपरित्यज्यापि शरीरं तद्भवति। प्रमाणं चोभयविधवाक्यान्यथाऽनुपपत्तिरेव। "पूर्वे" इति विशेषणाच्चैतत्सिद्धिः। मत्तो भावो येषां ते मद्भावाः। ये ते ब्रह्मणो मानसा जातास्ते मत्त एव जाता इति भावः॥ ६॥ ७॥

प्र० दी०—

महर्षयः सप्त भृग्वादय इति शङ्करः। तदसत्। पूर्वे इति विशेषणेन प्रथममन्वन्तरस्थानामेव ग्रहणस्योचितत्वात्। मोक्षधर्मसंवादाच्चेति भावेनाह॥ पूर्वे इति॥ इतोऽपि मरीच्यादय एवेत्याह॥ ते हीति॥ निरुपपदेन सप्तर्षिशब्देनेति शेषः। पूर्वे इत्यस्योत्तरत्र सम्बन्धेऽप्येतत्सिद्धमिति भावेनानेकप्रमाणोपन्यासः। ब्रह्मसावर्ण्यो रुद्रसावर्ण्यो दक्षसावर्ण्यो धर्मसावर्ण्य इति भविष्यन्तश्चत्वारो मनव इत्यन्ये। तदसदिति भावेनाह॥ चत्वार इति॥ स्वायम्भुवस्वारोचिषरैवतोत्तमाः। प्रथमातिक्रमे कारणाभावादिति भावः। किं च "येषां लोक इमाः प्रजाः" इति विशेषणमेष्वेव सम्भवति। नेतरेषु अतोऽप्येवमित्याह॥ तेषां हीति॥ इमा वर्तमानाः प्रजा अपत्यानि। न तु चतुर्दश मनवः। तेषु चतुर्णां यत् पृथक्करणं तत्र कारणेन भाव्यम्। अस्ति च तत्परोक्तेषु संज्ञासाम्यम्। न तु स्वायम्भुवादिषु। अतः कथमेतदित्यत आह॥ विभाग इति॥ प्राधान्यादेवेति शेषः। सञ्ज्ञासाम्यस्याप्रयोजकत्वात्। अन्यथा मेरुसावर्णैरपि ग्रहणप्रसङ्गादिति भावः। अस्त्वेवं प्राधान्यं च परोक्तानामेवेत्यत आह॥ प्राधान्यं चेति॥ स्वायम्भुवादीनामिति शेषः। किं च श्रुतौ स्वायम्भुवादीनामेवं पृथक्करणात्त एवात्रेत्याह॥ गौतमेति॥ पृथक्करणे न फलमिति शेषः। प्राथमिकत्वादेव प्राधान्यं भवतीत्युक्तम्।

तत्कथमित्यत आह ॥ पूर्वेभ्यो हीति ॥ तत्सन्ततावित्यर्थः । तेषां पूर्वेषामुत्तरान् प्रति । तत्सन्ततावजातान् प्रति प्रथमानां कथं प्राधान्यमित्यत आह ॥ अजातेष्विति ॥ विषयसप्तमीयम् । ज्यैष्ठ्यं प्रथमानां प्राधान्यमित्यर्थः । इदमुक्तं भवति । प्रधानगुणभावो हि सति सम्बन्धे भवति । अयुगपद्भाविषु चैतेषु प्रथमानामेव प्राधान्यमुत्तरेषां गुणत्वमुक्तविधया सम्भवति । न त्वन्यथा कथमपीति । प्रथमाश्चेद्गृह्यन्ते तदा चतुर्थस्तापसो गीताऽभिप्रेततया कुतो न व्याख्यात इत्यत आह ॥ तापसस्येति ॥ अनुक्तिरव्याख्यानम् । भगवति च "मद्भावा मानसा जाताः" इति विशेषणासम्भवादिति भावः । तापसस्य भगवदवतारत्वं कुत इत्यत आह ॥ तच्चेति ॥

"चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः ।
हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात्" ॥

इत्यादिना । ननु यदि विशेषणासम्भवात् प्रथमप्राप्तातिक्रमेण तत्सम्भवतां ग्रहणम्, तर्हि "मानसा जाताः" इति विशेषणासम्भवादेतान् परित्यज्य ब्रह्मसावर्ण्यादय एव ग्राह्याः । तेषु तत्सम्भवादिति भास्करः । तत्राह ॥ मानसत्वं चेति ॥ चतुर्णां दक्षदुहितरि किल भावो युगपदासीदित्येवंविधं मानसत्वं न सर्वेषामिति चेन्न । अत्रार्थे तद्धितोत्पत्तेरस्मरणात् । ननु ब्रह्मपुत्रास्सन्तु मानसाः । न तु तदा ते मनवः । किन्तु मच्छशरीरं परित्यज्य प्रियव्रतादिपुत्रा जातास्तदैव । अतो मनुषु मानसत्वमसम्भाव्य[1]मित्यत आह ॥ अन्येति ॥ तन्मानसं शरीरमपरित्यज्य स्थितानामप्यन्यपुत्रत्वं सम्भवतीति योजना । द्वितीये शरीरे जाते तत्पूर्वशरीरेणैक्यमापद्यत इति सम्प्रदायविदः । किमत्र प्रमाणमित्यत आह ॥ प्रमाणं चेति ॥ मनूनामेव ब्रह्ममानसपुत्रत्ववाक्यं प्रियव्रतादिपुत्रत्ववाक्यं चेत्युभयविधवाक्यम् । उपचारत्वकल्पना क्लिष्टैव । किं च "पूर्वे" इति विशेषणं पूर्वेणैव सम्बध्यते परेणैव वा उभाभ्यामपीति त्रयः पक्षाः ।

---

1. क. असम्भाव्यमेव

पक्षत्रयेऽपि चत्वारो मनवः प्रथमा एवेति सिध्यति। आद्ये सप्तर्षीणां प्रथमत्वेन तत्साहचर्यात्। द्वितीयतृतीययोर्वचनादेवेति भावेनाह ॥ पूर्वं इति ॥ मयि भावो येषामिति व्याख्यानं प्रकृतासङ्गतं, कारणत्वस्यात्र प्रकृतत्वादिति भावेनाह ॥ मत्त इति ॥ भावो जन्म। ननु "मानसा जाता" इत्यनेन भगवतस्तत्कारणत्वमुच्यते। मैवम्। ततो मनूनिति वचनस्य सत्त्वेन "ब्रह्मणो मानसा जाताः" इति व्याख्येयत्वात्। तर्हि कथं न व्याहतिरित्यत आह ॥ ये त इति ॥ मत्त एव ब्रह्मान्तर्यामिणः। ब्रह्म तु द्वारमात्रमिति भावः ॥ ६ ॥ ७ ॥

भ० गी०—

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥८॥

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्ति च मां नित्यं तुष्यन्ति च रमन्ति च ॥९

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥

भा०—

सन्ति च भजन्तः केचिदित्याह ॥ अहमित्यादिना ॥८॥९॥१०॥११॥

प्र० दी०—

ननु "एतां विभूतिं" इति परिज्ञातुः फलमुक्तम्। तत्किमर्थं पुनरुच्यत इत्यतस्तात्पर्यान्तरमाह ॥ सन्ति चेति ॥ उक्तफले विश्वासजननार्थमिति शेषः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

भ० गी०—

अर्जुन उवाच—

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥
आहुस्त्वां ऋषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥१३॥
सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥१४
स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावनभूतेश देवदेव जगत्पते ॥ १५ ॥

भा०—

ब्रह्म परिपूर्णम् । "अथ कस्मादुच्यते परं ब्रह्म । बृहति बृंहयति" इति च श्रुतिः । बृह[1] बृहि वृद्धाविति पठन्ति । "परमं यो महद्ब्रह्म" इति च । विविधमासीदिति विभुः । तथा हि वारुणशाखायाम्—

"विभुः प्रभुः प्रथमं मेहनावृत इति स ह्येव प्राभवत् विविधोऽभवत्" ।

इति । "सोऽकामयत बहुः स्यां प्रजायेय" इत्यादेश्च ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

प्र० दी०—

ब्रह्मविभुशब्दौ ऐकार्थ्यपरिहाराय क्रमेण सप्रमाणकं व्याचष्टे ॥ ब्रह्मेति ॥ परं वस्तु ब्रह्मेति कस्मादुच्यते । बृहति पूर्णं भवति ।

1. अ. बृंह

बृंहयति पूरयति चान्यान् । बृहते र्मन्प्रत्ययोऽमागमश्च । ईश्वरो ब्रह्मणोऽन्यः । स कथं परं ब्रह्मेत्युच्यत इत्यत उक्तम् ॥ परममिति ॥ विविधमनेकरूपत्वेनाभवत् । मेहनावृतः सेचकस्य भगवतः प्रथमं रूपं विभु प्रभु चेत्येतदनूद्य व्याख्यायते । प्राभवत् समर्थोऽभवदिति विभुः । "सोऽकामयत" इति विविधभवने श्रुत्यन्तरम् । "विप्र-संभ्योड्ड सञ्ज्ञायां" इति च स्मृतिः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

भ० गी०—

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमान् त्वं व्याप्य तिष्ठसि
॥ १६ ॥

कथं विद्यामहं योगिन् त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया
॥ १७ ॥

भा०—

विभूतयो विविधभूतयः ॥ १६ ॥ १७ ॥

प्र० दी०—

विभूतयः ऐश्वर्याणि पृष्टानि । नानारूपाणि वक्ष्यन्ते । किं केन सङ्गतमित्यत आह॥ विभूतय इति ॥ विविधभूतयो नानाभूतानि रूपाणि ॥ १६ ॥ १७ ॥

भ० गी०—

विस्तरेणाऽऽत्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम्
॥ १८ ॥

श्रीभगवानुवाच—

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१९॥

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यश्च भूतानामन्त एव च ॥ २० ॥

भा०—

न जायते अर्दयति च संसारमिति जनार्दनः । तथा बाभ्रव्यशाखायां "स भूतस्स जनार्दनः" इति । स ह्यासीत् स नासीत् सोऽर्दयत्" इति ॥ १८ ॥ १९ ॥ २० ॥

प्र० दी०—

"अर्द गतौ याचने च" इति वचनादासुरजनानां नरकादिगमयितृत्वात्, जनैः याच्यत्वाद्वा जनार्दन इति शङ्करः । तदप्रामाणिकं व्याख्यानम् । इदं तु श्रौतत्वादुपादेयमिति भावेनाह ॥ न जायत इति ॥ नञः परनिपातः । अत एव नलोपाभावः । उत्तरपदे तस्य स्मरणात् । अर्दयति गमयति ॥ स ह्यासीदिति ॥ भूतोऽनादितः सत्तावानित्यर्थः । स नासीत् न जन्मवान् । सोऽर्दयतीति जनार्दनः ॥ ॥८ ॥ १९ ॥ २० ॥

भ० गी०—

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २२ ॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतनः ॥२२॥

रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥२४॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५

भा०—

विष्णुः सर्वव्यापित्वप्रवेशित्वादेः । "विष्लृ व्याप्तौ", "विश[1]प्रवेशने" इति च[2] पठन्ति ।

"गतिश्च सर्वभूतानां प्रजानां चापि भारत ।
व्याप्तौ मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ।
अधिभूतनिविष्टश्च तदिच्छुश्चास्मि[3] भारत ।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसञ्ज्ञितः" ॥

इति मोक्षधर्मे ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

प्र० दी०—

द्वितीयं विभूतिरूपम् । प्रत्यक्षं तिरोहितं च । अत्र विष्ण्वादिकं प्रत्यक्षमिति ज्ञापयितुं तच्छब्दान् व्याकुर्वन् "आदित्यानामहं विष्णुः" इति विष्णुशब्दं तावत्सप्रमाणकं व्याकरोति ॥ विष्णुरिति ॥ सर्वेति योग्यतया सम्बध्यते । आदिपदेन वक्ष्यमाणार्थसङ्ग्रहः । चशब्दो धात्वन्तरसमुच्चयार्थः । गच्छत्यनेनेति गतिः । भूतानां पृथिव्यादीनां, प्रजानां ब्रह्मादीनाम् । "वी गतिप्रजनकान्त्यशन[4]खादनेषु" इत्यतो गत्यर्थात् क्स्नुप्रत्ययः । धातोर्ह्रस्वश्च । मे मया । रोदसी द्यावापृथिव्यौ । व्याप्तौ व्याप्ते । विष्लृ व्याप्तावित्यतः क्नुः । कान्तिः

1. अ. विश 2. अ. हि 3. अ. तदिच्छुश्चापि 4. ख. कान्त्यसन

कमनीयता। वश कान्तावित्यतो नुः। धातोरकारस्येकारः शकारस्य षकारः। "वी गति" इत्यतो वा कान्तिकर्मणः क्स्नुः। अधिभूतं प्राग्व्याख्यातम्। विश प्रवेशने इत्यतः क्नुः। षत्वं च। तदिच्छुः अधिभूतस्य जन्मादीच्छुः। कान्तिरिच्छा। अतो वयतेर्वेष्टेश्च पूर्ववद्रूपम्। क्रमणात् त्रिविक्रमरूपेण पादविक्षेपात्। पूर्ववद्वयते-र्गत्यर्थात् कर्तरि प्रत्ययः॥ २१॥ २२॥ २३॥ २४॥ २५॥

भ० गी०—

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः॥२६

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम्।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम्॥ २७॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक्।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः॥२८

अनन्तश्चास्मि नागानां वरुणो यादसामहम्।
पितॄणामर्यमा चास्मि यमः संयमतामहम्॥२९॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम्।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम्॥३०

भा०—

सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः। "प्रीतिः सुखं कं आनन्दः" इत्यभिधानात्। "प्राणो ब्रह्म कं ब्रह्म, खं ब्रह्म" इति च।

"ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैः
विभर्ति जायमानं च पश्येत् ।
सुखादनन्तात्पालनात् लीयना[1]च्च
यं वै देवं कपिलमुदाहरन्ति" ॥

इति बाभ्रव्यशाखायाम् ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

प्र० दी०—

"सिद्धानां कपिलो मुनिः" इति कपिलशब्दं व्याचष्टे ॥ सुखेति ॥ सुखरूप इति कः । पाल्यते जगदनेनेति पिः । पा रक्षणे इत्यतः किः । लीयते जगदनेनेति लः । ली श्लेषणेत्यस्मात् डः । ला आदान इत्यतो वा कः । ततः कर्मधारयः । कशब्दस्य सुखवाचित्वेऽभिधानं प्रयोगं च पठति ॥ प्रीतिरिति ॥ समग्रार्थे श्रुतिमाह ॥ ऋषिमिति ॥ तं भगवन्तं ऋषिं कपिलं च पश्येत् । कथं ऋषिः सर्वज्ञत्वादित्युच्यते । यः प्रसूतं पूर्वकल्पेषु जातम् । जायमानं वर्तमानं च एवमागामि च । जगत् ज्ञानैः विभर्ति जानाति इति यावत् । कथं कपिल इत्यत उक्तम् । सुखादिति ॥ यच्छब्दद्वयस्य "तं" इत्यनेनान्वयः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

भ० गी०—

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥३१॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥३२

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥३३॥

1. अ. लायनात्

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा
धृतिः क्षमा ॥ ३४ ॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहं ऋतूनां कुसुमाकरः ॥३५॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम्
॥ ३६ ॥

भा०—

आनन्दरूपत्वात् पूर्णत्वात् लोकरमणत्वाच्च रामः ।

"आनन्दरूपो निष्परीमाण एष लोकश्चै-
तस्माद्रमते तेन रामः" ।

इति शाण्डिल्यशाखायाम् । रश्च अमश्चेति व्युत्पत्तिः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

प्र० दी० —

"रामः शस्त्रभृतामहं" इति रामशब्दं व्याख्याति॥ आनन्देति ॥ आनन्दरूपत्वात् पूर्णत्वादित्येकोऽर्थः । रमत इति रः । रमु क्रीडाया-मित्यतो "अमन्ताड्डः" इति डः । न विद्यते मा प्रमापरिच्छेदो अस्ये'ति अमः । "लोक" इत्यपरोऽर्थः । रमतेः घञ् । अत्र श्रुति-माह ॥ आनन्देति ॥ आद्येऽर्थे विग्रहं दर्शयति॥ रश्चासावमश्चे-त्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

---

1. क. यस्य

*

भ० गी०—

बृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशनाकविः ॥३७॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८

भा०—

आच्छादयति सर्वं वासयति वसति च सर्वत्रेति वासुदेवः । देवशब्दार्थ उक्तः पुरस्तात् ।

"छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततोऽस्म्यहम्" ।

इति मोक्षधर्मे । विशिष्टः सर्वस्मात् आ समन्तात्स एवेति व्यासः । तथा चाग्निवेश्यशाखायाम्[1]—

"स व्यासो वीति तमप्[2] वै विः सोऽधस्तात् स उत्तरतः स पश्चात् स पूर्वस्मात् स दक्षिणतः स उत्तरत इति" इति ।

"यच्च किञ्चिज्जग[3]त्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" ॥

इति च ॥ ३७ ॥ ३८ ॥

प्र० दी०—

"वृष्णीनां वासुदेवोऽस्मि" इति वासुदेवशब्दं व्याचिकीर्षुः वासुशब्दार्थं तावदाह ॥ आच्छादयतीति ॥ वस आच्छादन इत्यत उण् । वासयति[4] सर्वमिति वर्तते । वस निवासे इत्यतो ण्यन्तादुण् । वसति चेति केवलादुणेव । ततः किमायातं वासुदेवशब्द-

1. अ. आग्नेयीशाखायम् 2. अ. तमं स वै
3. अ. जगत्यस्मिन् 4. वासयति च सर्वम्

स्येत्यत आह ॥ देवेति ॥ "तथा हि देवशब्दार्थे", इत्यत्र । ततः कर्मधारयः । विश्वं समस्तं भूत्वा प्राप्य "अभू प्राप्तौ आत्मनेपदी" इति वचनात् सर्वभूताधिवासश्चेति तत्पुरुषो बहुव्रीहिश्च । अत्रापि देवशब्दार्थो ग्राह्यः ।

"मुनीनामप्यहं व्यासः" इति व्यासशब्दं व्याचष्टे ॥ विशिष्ट इति ॥ "सर्वस्मात् विशिष्टः" इति विशब्दार्थः । आ इत्यनुवादेन समन्तात् इति व्याख्यानम् । स इत्यस्य एव इति । सृ गतौ सृप्लृ गतौ" इत्यतो वा डे रूपमेतत् । न तु तदः । व्यासमित्याद्यनुपपत्तेः । समन्तात् गतः सर्वगत इत्यर्थः । स व्यासः । कुतः ? वीति हेतोः । कोऽर्थः । तमपो अर्थो हि विशब्दः । उत्तरतः उपरिष्टात् । "यच्च किञ्चित्" इति भगवतः सर्वगतत्वे प्रमाणम् ॥ ३७ ॥ ३८ ॥

भ० गी०—

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

भा०—

मया विना यद्भूतं स्यात्तन्नास्ति ।

"विश्वरूप अनन्तगतिः[1] अनन्तभाग अनन्तग अनन्तः"

इत्यादि मोक्षधर्मे ॥ ३९ ॥ ४० ॥

प्र० दी०—

"न तदस्ति विना" इत्यत्र पदानां व्यवहितत्वादन्वयमाह ॥ मयेति ॥ भगवतो अनन्तै रूपैः । सर्वपदार्थव्यापित्वे प्रमाणमाह ॥ विश्वेति ॥ विश्वं रूपं प्रतिमा यस्यासौ विश्वरूपः । अनन्तानां गतिः

1. अ. अनन्तगते

आश्रयोऽनन्तगतिः। अनन्ता भागाः अवतारा यस्यासावनन्तभागः। अनन्तान् पदार्थान् गतोऽनन्तगः। अनन्तः कालाद्यपरिच्छिन्नः॥३९॥४०

**भ० गी०—**

> यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा।
> तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्॥४१॥

भा०—

यद्यद्विभूतिमदिति विस्तरः। विष्ण्वादीनि तत्स्वरूपाण्येव। अन्यानि तु तेजोयुक्तानि। तथा च पैङ्गिखिलेषु—

> "विशेषका रुद्रवैन्येन्द्रदेवा राजन्याद्या
> अंशयुताऽन्यजीवाः।
> कृष्णव्यासौ रामकृष्णौ च रामकपिल-
> यज्ञप्रमुखाः स्वयं सः"।

इति।

> "स एवैको भार्गवदाशरथिकृष्णाद्यास्तु
> अंशयुताऽन्यजीवाः"

इति गौतमखिलेषु।

> "ऋषयो मनवो देवा मनुपुत्रा महौजसः।
> कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः।
> एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्"।

इति[1] भागवते। ऋष्यादीन् अंशयुतत्वेनोक्त्वा वराहादीन् स्वरूपत्वेनाह। तुशब्द एवार्थे। अन्यस्तु विशेषो न कुत्राप्यवगतः। अंशत्वं तत्राप्यवगतम् "उद्बर्हात्मनः केशौ"। मृडयन्ति इति च बहुवचनं चायुक्तम्। न ह्यन्तराऽन्यदुक्त्वा पूर्वमपरामृश्य तत्क्रियोच्यमाना दृष्टा कुत्रचित्॥४१॥

1. अ. इति च भागवते

प्र० दी०—

"एष तूद्देशतः" इत्येतच्छब्दोऽनुक्रान्तपरामर्शीऽति प्रतीतिनिरासार्थमाह ॥ यद्यदिति ॥ वक्ष्यमाणं बुद्धिस्थमेतच्छब्देन परामृश्यते। शृङ्गिग्राहिकयोक्तेरपि लक्षणोक्तेर्विस्तरत्वादिति भावः । विभूतिमदादिकं मम तेजोरूपेणांशेन सह भवतीत्युक्त्या विष्ण्वादीनामपि भगवदंशयुक्तत्वं प्रतीयते । तेषामप्येतल्लक्षणोपेतत्वात् । तन्निवृत्त्यर्थमाह ॥ विष्ण्वादीनीति ॥ तर्हि किंविषयमेतद्वाक्यमित्यत आह ॥ अन्यानि त्विति ॥ कुत एतदित्यत आह ॥ तथा चेति ॥ विशेषकाः गरुडानन्तविरिञ्चाः । वैन्यः पृथुः । राजन्यग्रहणेन गृहीतस्यापि पुनरुक्तिः साक्षादवतारत्वविशेषोक्तिबाधनार्थम् । कृष्णो धर्मसूनुरपि। रामो भार्गवोऽपि। अंशयुक्तत्वेनोक्त्वा कला इत्यनेन कला एव कलाः। न स्वरूपत्वेन । "एते स्वांशकलाः" इत्यनेन स्वरूपांशरूपा एव कलाः। न तु पूर्ववदुपचारेणेति । नन्वत्रैते वराहाद्याः परमपुरुषस्य अंशा एव। कृष्णस्त्वंशी भगवान् स्वयमिति प्रतीयते । तत्कथमुक्तव्याख्यानम्। अन्यथा तुशब्दानुपपत्तेरित्यत आह ॥ तुशब्द इति ॥ ततश्चायमर्थः । एते वराहाद्याः पुंसः स्वांशकलाः । कोऽर्थः । कृष्णः परमपुरुषो भगवान् स्वयमेव एत इति। कुत एतदिति चेदुदाहृतश्रुतिसंवादात् । अर्थान्तरस्य संवादाभावाच्चेत्याह ॥ अन्यस्त्विति ॥ वराहदयो अंशाः । कृष्णोंऽशी इत्येवंरूपः । इतोऽप्ययं विशेषो न युक्त इत्याह ॥ अंशत्वमिति ॥ तत्रापि कृष्णेऽपि । किं चास्मिन् व्याख्याने कृष्णस्यैकस्यैव प्रकृतत्वात् ।

"इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे"

इत्युत्तरवाक्ये बहुवचनं नोपपन्नमित्याह ॥ मृडयन्तीति ॥ ननु बहुवचनं पूर्वोक्तैः वराहादिभिः सम्बध्यते । न कृष्णेनेति चेन्न। "कृष्णस्तु भगवान् स्वयं" इति वाक्यार्थेन व्यवहितत्वात् । व्यवहितस्यापि पुनः सन्निधानाय परामर्शाभावात् । सति गत्यन्तरेऽध्याहारायोगात् । असंनिहितेनान्वयबोधस्य क्वाप्यदर्शनादिति भावेनाऽऽह ॥ न हीति ॥ "क्रिया" इति प्रकृतापेक्षयोक्तम् । ननु सन्निधेरपि

योग्यता बलवतीति चेत्। सत्यम्। सन्निधिमनतिक्रम्य योग्यान्वय-स्तूक्तः ॥ ४१ ॥

**भ० गी०—**

**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥४२**

॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

**भा०—**

किं इति वक्ष्यमाणप्राधान्यज्ञापनार्थम्। न तूक्तनिष्फलत्व-ज्ञापनाय। तथा सति नोच्येत।

"अज्ञात्वैनं सर्वविशेषयुक्तं देवं वरं को
विमुच्येत बन्धात्"।

इति ऋग्वेदखिलेषु। त्वं तु बहुफलप्राप्तियोग्य इति "तव" इति विशेषणम्। अन्यस्तुत्यर्थत्वेन प्रसिद्धश्च एकत्र किंशब्दः।

"रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम्।
तावुभौ यदि[1] न स्यातां तपसा किं प्रयोजनम्"॥

इत्यादौ। प्राधान्यं च सिद्धमेकत्र दर्शनात् सर्वत्र भगवद्दर्शनस्य "यो मां पश्यति सर्वत्र" इत्यादौ॥ ४२॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीता-भाष्ये दशमोऽध्यायः॥ १०॥

**प्र० दी०—**

"अथवा बहुनैतेन किं ज्ञातेन" इति पूर्वोक्तव्यस्तज्ञानाक्षेपाऽत्तस्य निष्फलत्वमिति प्रतीनिनिरासार्थमाह॥ किमिति॥ किमित्ययमाक्षेपो

1. अ. रागद्वेषौ न चेत् स्यातां

वक्ष्यमाणसर्वव्याप्तरूपज्ञानस्य उक्तरविप्रभृतिपरिच्छिन्नवस्तुस्वरूपज्ञानापेक्षया प्राधान्यज्ञापनार्थमेव न तूक्तविशेषज्ञानस्य निष्फलत्वज्ञापनार्थम्। निष्फलत्वे तदुक्तिवैयर्थ्यापत्ति[1]रित्यर्थः। ननु व्याप्तिज्ञानेनैव मुक्तिसम्भवाद्विशेषज्ञानं व्यर्थमेव किं न स्यादित्यत आह॥ अज्ञात्वेति॥ प्रियशिरस्त्वाद्यप्राप्तिरित्यादिकं ध्यानापेक्षयोक्तम्। ज्ञानापेक्षया तु श्रुतिरित्यविरोधः। अथवा विशिष्टाधिकारिविषयेयं श्रुतिः। ननु व्याप्तज्ञानयोग्यानां विशेषज्ञानं निष्फलमेव। अन्यान् प्रति तु तदुक्तिरिति व्यवस्थाऽस्तु। "तव" इति विशेषणसामर्थ्यादित्यत आह॥ त्वं त्विति॥ अतो न तव विशेषज्ञानमात्रेणालमिति ज्ञापयितुमिति शेषः। विशेषणस्यान्यथासिद्धत्वान्नोक्तव्यवस्थाकल्पकत्वमिति भावः। ननु किं ज्ञातेन, न किमपीति शब्दादुक्तस्य नैष्फल्ये प्रतीते तदुक्तिवैयर्थ्यप्रसङ्गात् निष्फलाल्पफलयोः महाफलत्वाभावसादृश्यात् गौण्या वृत्त्या उक्तस्याप्राधान्यप्रतीतावर्थाद्वक्ष्यमाणस्य प्राधान्यप्रतीतिरित्युक्तम्। तत्र गौणप्रयोगे प्रयोजनं वाच्यमिति चेन्न। रूढोपचारत्वादिति भावेनाऽऽह॥ अन्येति॥ स्तुतिः प्रशस्तताज्ञापनम्। अर्थः प्रयोजनम्। स्यादिदं व्याख्यानं यदि परिच्छिन्नज्ञानाद्व्याप्तिज्ञानस्य प्राधान्यं प्रमितं स्यात्। तदेव कुत इत्यत आह॥ प्राधान्यं चेति॥ "यो मां" इति विशिष्टफलकथनात्। न्यायसिद्धोऽप्यर्थो वाक्यसंमत्या दृढो भवतीत्येतदुक्तम्॥ ४२॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य
टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां
दशमोऽध्यायः समाप्तः॥ १०॥

---

1. क. ख. वैयर्थ्यापत्तेः

## ॥ अथ एकादशोऽध्यायः ॥

भ० गी०—

अर्जुन उवाच—

मदनुग्रहाय परमं गुह्यमध्यात्मसञ्ज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥२॥
एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥

भा०—

॥ हरिः ॐ ॥ यथा श्रुते ध्यानं शक्यं तथा स्वरूपस्थितिरनेनाध्यायेनोच्यते ॥ १ ॥ २ ॥ ३ ॥

प्र० दी०—

॥ हरिः ॐ ॥ एतदध्यायप्रतिपाद्यमर्थमाह ॥ यथेति ॥ "दशमान्ते विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति व्याप्तोपासनं सङ्क्षेपेणोक्तम् । न च सङ्क्षेपोक्तस्य ध्यानं शक्यम् । बुद्धावनारोहात् । अतो यथाभूते व्याप्तरूपे विस्तरेण श्रुते ध्यानं शक्यं भवति । तथाभूतस्य रूपस्थितिरर्जुनाय प्रदर्शितस्यानुवादेनानेनैकादशाध्यायेनोच्यते । स्वरूपग्रहणेन विश्वरूपस्य मायादिना तदैव निर्माय विसृष्टत्वं निवारयति ॥ १ ॥ २ ॥ ३ ॥

भ० गी०—

मन्यसे यदि तच्छक्यं मयाद्‍ द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयाऽत्मानमव्ययम् ॥ ४ ॥

श्रीभगवानुवाच—

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥५॥

पश्याऽदित्यान् वसून् रुद्रान् अश्विनौ
मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याऽश्चर्याणि भारत ॥ ६ ॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥८॥

भा०—

प्रभुः समर्थः ।

"नास्ति तस्मात् परं भूतं पुरुषाद्वै सनातनात्"

इति मोक्षधर्मे । "प्रभुरीशः समर्थश्च" इत्याद्य[1]भिधानम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

प्र० दी०—

"मन्यसे यदि" इत्यत्र प्रभुशब्दो न स्वामित्वमात्रार्थः । किं तु तवातिसामर्थ्यात् त्वत्सामर्थ्येनैवातीन्द्रियस्यापि दर्शनमिति भावेन प्रयुक्त इत्याशयेनाह ॥ प्रभुरिति ॥ ईश्वरस्य निरतिशयसामर्थ्ये प्रमाणमाह ॥ नास्तीति ॥ भूतं समर्थ्यम् । प्रभुशब्दस्य समर्थार्थत्वेऽभिधानमाह ॥ प्रभुरिति ॥ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ॥ ८ ॥

1. अ. इत्यादि च अभिधानम्

भ० गी०—

सञ्जय उवाच—

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

भा०—

हरिः सर्वयज्ञभागहारित्वात्।
"इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम्।
वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः" ॥

प्र० दी०—

"महायोगेश्वरो हरिः" इत्यत्र हरिशब्दस्य प्रकृतोपयुक्तमर्थमाह ॥ हरिरिति ॥ गेहेष्विष्टिगृहेषु। हरतेरिकारप्रत्ययः। श्रेष्ठोऽप्राकृतः। अप्राकृतविग्रहस्य साकारस्यैवानन्तपूजास्थानेषु स्वरूपेणैव युगपत् सन्निधाने किं वक्तव्यं महायोगेश्वरत्वमिति ॥ ९ ॥ १० ॥

भ० गी०—

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

भा०—

सर्वाश्चर्यमयं, सर्वाश्चर्यात्मकम् ॥ ११ ॥

प्र० दी०—

"सर्वाश्चर्यमयं" इति केनचित् प्राचुर्यार्थो मयट् व्याख्यातः। तदसत्। सर्वशब्देन गतार्थत्वादिति भावेनाह ॥ सर्वेति ॥ मयटस्तादात्म्यार्थत्वे प्रमाणमुक्तमेव ॥ ११ ॥

भ० गी०—

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्यात् भासस्तस्य
महात्मनः ॥ १२ ॥

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यत् देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥

ततस्स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

अर्जुन उवाच—

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥

भा०—

सहस्रशब्दोऽनन्तवाची । तदपि "पाकशासनविक्रम" इत्यादिवत् प्रत्यायनार्थमेव । तथा हि ऋग्वेदखिलेषु—

"अनन्तशक्तिः परमोऽनन्तवीर्यः सोऽनन्त-
तेजाश्च ततस्ततोऽपि"।

इति । महातात्पर्याच्च प्राबल्यम् । न च परिमाणोक्त्या किञ्चित् प्रयोजनम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

प्र० दी०—

"दिवि सूर्यसहस्रस्य" इति विश्वरूपस्य सहस्रसूर्योपमप्रभत्व-मुच्यते । तत्र सहस्रशब्दो दशशतवाचीति प्रतीतिनिरासार्थमाह ॥

सहस्रेति ॥ अनन्तसूर्योपमप्रभत्वमपि भगवतो न वास्तवम् । निरुपमत्वात् । किं तर्हीत्यत आह ॥ तदपीति ॥ प्रत्यायनार्थं बुद्धिप्रवेशनार्थमेवोच्यते । यथा भगवतो दाशरथेः पाकशासनोपमपराक्रमत्वमित्यर्थः । सहस्रशब्दस्य प्रसिद्धार्थपरित्यागः कुत इत्यत आह ॥ तथा हीति ॥ ततस्ततः सूर्यादेरपि विलक्षण इति शेषः । कुतः श्रुत्या गीतावाक्यस्य बाध इति चेत् । शतं सहस्रं इत्यपरिमितनामानीति गीतावाक्यस्य सावकाशत्वेन दौर्बल्यात् । श्रुतेः निरवकाशत्वेन प्राबल्यात् । इतश्च श्रुतेः प्राबल्यमित्याह ॥ महातात्पर्याच्चेति । समस्तागमानां महाप्रयोजनाय यद्भगवति महातात्पर्यं, श्रुतेस्तदानुकूल्यात्, गीतावाक्यस्य तत्प्रातिकूल्यादित्यर्थः । कथं गीतावाक्यस्य तत्प्रातिकूल्यमिति चेत् । किं भगवतः परिमितप्रभत्वमेव वस्तुतः । उतापरिमितप्रभस्याऽप्यत्र सहस्रसूर्योपमप्रभत्वमुच्यते । नाद्यः । सकलश्रुतिस्मृतीतिहासपुराणविरोधात् । द्वितीये त्वपरिमितस्य परिमाणोक्त्या किञ्चिदपि प्रयोजनं न सिध्यति । कुतो महदित्याह ॥ न चेति ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

भ० गी०—

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥

भा०—

अनेकशब्दोऽनन्तवाची । "अनन्तबाहुं" इति वक्ष्यति । "सर्वतः पाणिपादं तत्" इत्यादि च ।

"विश्वतश्चक्षुरुत विश्वतो मुखो
विश्वतो बाहुरुत विश्वतस्पात् ।

सं बाहुभ्यां धमति सम्पतत्रै-
द्यावाभूमी जनयन् देव एकः ”॥

इति ऋग्वेदखिलेषु[1]।

“विश्वतश्चक्षुरुत विश्वतो मुखो
विश्वतो बाहुरुत[2] विश्वतस्पात्।
सं बाहुभ्यां नमति सम्पतत्रै-
द्यावाभूमी जनयन् देव एकः ”॥

इति यजुर्वेदे च।

प्र० दी०—

“अनेकबाहूदरवक्त्रनेत्रं” इत्यत्र अनेकशब्दस्य द्व्यादौ पर्यवसाना-द्विवक्षितमर्थमाह ॥ अनेकेति॥ “अनेकवक्त्रनयनं” इत्यपि व्याख्यातम्। कुत एतदित्यत आह ॥ अनन्तेति॥ “सर्वत” इत्यस्यार्थः तात्पर्यनिर्णयेऽवगन्तव्यः। इत्यादि च वक्ष्यति। बाहुभ्यां प्रधानाभ्यां पतत्रैः पतत्रसदृशैरितरबाहुभिः संधमति अग्न्यादि-भूतानि संयोजयति इति प्रत्येकमन्वयः। सं नमति इत्यस्याप्यय-मेवार्थः।

भा०—

विश्वशब्दश्चानन्तवाची।

“सर्वं समस्तं विश्वमनन्तं पूर्वमेव[3] च”

इत्यभिधानात्।

“अनन्त[4]बाहुमनन्तपादमनन्तरूपं पुरुवक्त्रमेकम्”

इति च बाभ्रव्यशाखायाम्। महत्त्वाद्युक्तिस्तु तदात्मकत्वेनापि भवति। अन्यथा “अनादिमत्परं ब्रह्म इत्याद्ययुक्तं स्यात्।

1. अ. ऋग्वेदे 2. अ. विश्वतो हस्त 3. अ. पूर्णं
4. अ. अनन्तपादं तमनन्तबाहुं अनन्तवक्त्रं पुरुरूपमेकम्

एकत्र त्वनन्तान्यस्य रूपाणि इत्यनन्तरूपः । अन्यत्र त्वपरिमाण इति । उक्तं ह्युभयमपि ।

"परात् परं यन्महतो महान्तं
यदेकमव्यक्तमनन्तरूपम्" ।

इति यजुर्वेदे । अव्यक्तस्यानन्तत्वादेव महत्त्वेऽपरिमितत्वं[1] सिध्यति ।

"महान्तं च समावृत्य प्रधानं समवस्थितम् ।
अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यते" ॥

इत्यादित्यपुराणे । तानि चैकैकानि रूपाण्यनन्तानीति चैकत्र भवति ।

"असङ्ख्याताः ज्ञानकाः तस्य देहाः
सर्वे परिमाणविवर्जिताश्च" ।

इति ऋग्वेदखिलेषु ।

"यावान् वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः ।
उभेऽस्मिन् द्यावापृथिवी अन्तरेव समाहिते ।
उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ" ॥

इति च ।

"कृष्णस्य गर्भजगतोऽतिभरावसन्न-
पार्ष्णिप्रहारपरिरुग्णफणातपत्रम्" ।

इति च भागवते ।

प्र० दी०—

एतयोर्मन्त्रयोः प्रकृतानुपयोगादयुक्तमुदाहरणमित्यत आह ॥ विश्वशब्दश्चेति ॥ तथा च प्रथमार्थे तसिः इत्युक्तं भवति । स्पष्टार्थां चात्र श्रुतिमाह ॥ अनन्तपादमिति ॥ यदि भगवाननन्तबाह्वादिः तदा परममहत्परिमाणस्स्यात् । अन्यथा तदयोगात् । न च तद्युक्तम् । "रूपं महत्ते" इति महत्त्वमात्रोक्तेः । तथा "बहुवक्त्रनेत्रं" इति

1. अ. अपरिमेयत्वम्

बहुत्वमात्रोक्तेरनन्तबाह्वादित्वोक्तिश्चानुपपन्नेत्यत आह ॥ महत्त्वादीति ॥ स्यादयं विरोधो यदि भगवद्रूपस्य महत्त्वमात्रं तदवयवानां च बहुत्वमात्रमुच्येत । न चैवम् । अवच्छेदकाश्रवणात् । महत्त्वबहुत्वोक्तिस्तु परममहत्त्वात्मकत्वेनानन्तावयवत्वेन च सह सम्भवति । परममहति महत्त्वस्यानन्ते च बहुत्वस्यान्तर्भावादित्यर्थः । अवच्छेदकानुक्तावप्यवान्तरमहत्त्वादिग्रहणे को दोष इत्यत आह ॥ अन्यथेति ॥ तत्र परममहत्त्वस्यानन्तावयवत्वस्य चोक्तेरिति भावः ।

"पश्यामि त्वा सर्वतोऽनन्तरूपं त्वया ततं विश्वमनन्तरूप"

इति अनन्त[1]शब्दद्वयस्य माहात्म्यातिशयसूचनायार्थभेदमाह ॥ एकत्र त्विति ॥ अपरिमाणोऽपरिच्छिन्न इति अनन्तरूप इति सम्बन्धः । स्यादिदं व्याख्यानं यदीदं द्वयं प्रामाणिकं स्यादित्यत आह ॥ उक्तं हीति ॥ महान्तं महत् । "महतो महान्तं" इति अनन्तं अपरिच्छिन्नपरिमाणं रूपमस्येत्युक्तार्थे प्रमाणम् । एकं भिन्नमपि । अनन्तरूपमित्यनन्तान्यसङ्ख्यानि अस्य रूपाणि इत्यत्र । ननु "महतो महान्तं इति महत्तत्त्वात् महत्त्वमेवोच्यते । न त्वनन्तत्वम् । ततश्च "यदेकमव्यक्तं" इत्यव्यक्तव्यापित्ववचनात् तत्साम्यमेव सिध्यतीत्यत आह ॥ अव्यक्तस्येति ॥ महतो महत्त्वेऽव्यक्तव्यापित्वे चेत्यपि ग्राह्यम् । अव्यक्तस्यानन्तत्वं कुत इत्यत आह ॥ महान्तं चेति ॥ अनन्तस्य विष्णोः प्रतिमाभूतस्य तस्यान्तः परिमाणं परिच्छेदः कार्यतः सङ्ख्यानं सङ्ख्यापरिच्छेदोऽपि न विद्यते । प्रकारान्तरेणानन्तरूपशब्दद्वयस्यार्थभेदमाह ॥ तानि चेति ॥ एकस्यानन्तरूपशब्दस्यानन्तसङ्ख्यारूपार्थत्वे स्थिते सत्येकत्रानन्तरूपशब्दे । तानि चानन्तसङ्ख्यानि रूपाणि प्रत्येकमपरिच्छिन्नपरिमाणानीत्यर्थो भवतीत्यर्थः । अत्र प्रमाणमाह ॥ असङ्ख्याता इति ॥ ज्ञानकाः ज्ञानानन्दात्मकाः । अयं बहिः व्याप्तराकाशः परमात्मा यावान् यावत्परिमाणः तावानेवैषोऽन्तर्हृदये स्थितः परमात्मेत्यर्थः । गर्भे जठरे जगत् यस्यासौ तथोक्तः । अवसन्नो अवनतः । गर्भजगत्त्वेनापरिच्छिन्नपरिमाणत्वं लभ्यते ।

---

1. क. अनन्तरूपशब्दद्वयस्य

भा०—

न चैतदयुक्तम्। अचिन्त्यशक्तित्वादीश्वरस्य।

"अचिन्त्याः खलु ये भावा न तान् तर्केण योजयेत्"

इति च[1] श्रीविष्णुपुराणे। "नैषा तर्केण मतिरापनेया" इति[2] श्रुतिः। अतिप्रसङ्गस्तु महातात्पर्यवशात् वाक्यबलाच्चापनेयः। न हि घटवत् कश्चित्[3] पदार्थो न दृष्ट इत्येतावता प्रमाणदृष्टः सन्[4] निराक्रियते। केषुचित् पदार्थेषु वाक्यव्यवस्थाऽचिन्त्यशक्तित्वाभावादङ्गीक्रियते।

"गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्य-
श्रुता अपि नैवात्र शङ्का।
चिन्त्या अचिन्त्याश्च तथैव दोषाः
श्रुताश्च नाङ्गैर्हि तथा प्रतीताः।
एवं परेऽन्यत्र श्रुताश्रुतानां
गुणागुणानां च क्रमाद्व्यवस्था"॥

इति जाबालखिलश्रुतेश्च। उपचारत्वपरिहाराय "न मध्यं" इति। अन्यथा आद्यन्ताभावेनैव तत्सिद्धेः। विश्वरूपः पूर्णरूपः।

"स विश्वरूपोऽन्यूनरूपोऽतो[5] यं सोनन्तरूपो न हि नाशोऽस्ति तस्य"

इति शाण्डिल्यशाखायाम्॥ १६॥

प्र० दी०—

कृष्णादीनामप्यपरिच्छिन्नपरिमाणत्वं वदन्तो वक्तव्याः। तत्राल्पपरिमाणप्रतीतिः या सा किं भ्रान्तिरुत प्रमितिरिति। आद्ये क्रियादेः द्विभुजचतुर्भुजादेश्च मिथ्यात्वं स्यात्। न द्वितीयः। युगपदेकत्राल्पानल्पपरिमाणसमावेशस्यायुक्तत्वात्। अतोऽपरिच्छिन्नपरिमाणोक्ति-

1. अ. चशब्दो न श्रूयते 2. अ. इति च श्रुतिः 3. अ. कश्चिदपि
4. अ. सः 5. अ. यतो

रुपचारमात्रमिति चेत् । किमिदमनेकपरिमाणत्वस्यायुक्तत्वम् । किमन्यत्रादर्शनेनासम्भावितत्वम् । उत नायमल्पानल्पपरिमाणोपेतो द्रव्यत्वात् । नायं परममहत्परिमाणोऽल्पपरिमाणत्वात् पटवदित्यादियुक्तिविरुद्धत्वम् । अथातिप्रसङ्गदुष्टत्वम् । किं वाऽप्रामाणिकत्वम् । नाद्य इत्याह ॥ न चेति ॥ अघटितघटनाशक्त्युपेते किं नामासम्भावितमिति भावः । न द्वितीयः । ईश्वरस्य युक्त्यगोचरत्वेन तदनवकाशादिति भावेनाऽह ॥ अचिन्त्या इति ॥ एषा ब्रह्मविषया । अपनेया निराकार्या । अतिप्रसङ्गोऽपि किं यदीश्वरो विरुद्धपरिमाणद्वयोपेतस्स्यात् तदा निर्दुःखो दुःखी च स्यादितीश्वरमधिकृत्य स्यात् । उत प्राणादयोऽपि तथा स्युः । ततश्च "अणुश्च" इत्यादिका तद्विषयवाक्यव्यवस्था नाङ्गीक्रियत इत्यन्यदधिकृत्य स्यात् । आद्यं दूषयति ॥ अतिप्रसङ्गस्त्विति ॥ अविशेषमाश्रित्य ह्ययमतिप्रसङ्गः । न चासावस्ति । निर्दोषानन्तगुणत्वे हरेः[1] श्रुतीनां महातात्पर्येण दुःखादेः तद्विरोधात्, परिमाणद्वयस्य तु तदविरोधात् दुःखादेरप्रामाणिकत्वात् परिमाणद्वयस्य तूक्तवक्ष्यमाणवाक्यसिद्धत्वादिति भावः । विपर्ययापर्यवसायी चायं प्रसङ्ग इति भावेनाह ॥ न हीति ॥ यदि घटः पृथुबुध्नोदराकारस्स्यात् तर्हि पदार्थो न स्यात् । तथाविधस्य पदार्थस्य कस्याप्यदृष्टत्वादिति प्रसङ्गो यथा न युक्तः । भवति च पदार्थः तस्मात् पृथुबुध्नोदराकारो न भवतीति विपर्ययस्य प्रमाणबाधितत्वेनापर्यवसानात् । तथात्वेन तस्य धर्मिग्राहकप्रमाणदृष्टत्वात् । तथा प्रकृतेऽपीति । एतेनानुमानानां कालात्ययापदिष्टत्वं चोक्तं भवति । प्राणादिकमधिकृत्यातिप्रसङ्ग इति द्वितीयं निराकरोति ॥ केषुचिदिति ॥ अत्रापि सम्भावनाहेतुभावाभावाभ्यां विशेषादविशेषोऽसिद्ध इति भावः । चतुर्थं निरस्यति ॥ गुणा इति ॥ श्रुता अश्रुता अपि सुविरुद्धा अन्यत्र सहादृष्टाः । अविरुद्धाश्च । तथा गुणा इव दोषाः श्रुता अश्रुताश्च नैव सन्ति । किन्त्वज्ञैः मिथ्यादृष्टिभिर्हि सन्तीति प्रतीताः । एवं परं ईश्वरे स्थितिः ।

1. क. हरेरेव

ततोऽन्यत्र तु श्रुतानां प्रमाणान्तरसिद्धानां च गुणदोषाणां व्यवस्थाऽवस्थानम्। तच्च क्रमादुत्तमेषु गुणबाहुल्यं दोषाल्पत्वं, मध्यमेषूभयसाम्यं, अवरेषु दोषबाहुल्यं गुणाल्पत्वमिति। तदेवमसम्भावनाद्यभावान्न भगवत्यपरिच्छिन्नपरिमाणत्वोक्तेरुपचरितत्वं कल्प्यम्। अर्जुनेनापि तन्निराकृतमिति भावेनाह॥ उपचारस्त्विति॥ नान्तं न पुनस्तवादिं पश्यामीति आद्यन्ताभावोक्तेरुपचरितत्वपरिहाराय "न मध्यं" इत्युक्तम्। मध्यनिराकरणार्थमेव तत् किं न स्यादित्यत आह॥ अन्यथेति॥ उपचारत्वपरिहारार्थत्वाभावे। तद्वैयर्थ्यं स्यादिति शेषः। कुतः? आद्यन्तसापेक्षत्वात्[1] मध्यस्य तदभावोक्त्यैव तदभावसिद्धेः। विश्वं महदादिकं रूपं स्वरूपमस्येति प्रतीतिं सप्रमाणकं निवारयति॥ विश्वरूप इति॥ एतच्चाभ्यासरूपमिति मन्तव्यम्॥ १६॥

भ० गी०—

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम्।
पश्यामि त्वां दुर्निरीक्ष्यं समन्तात्
दीप्तानलार्कद्युतिमप्रमेयम्॥ १७॥

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम्।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे॥ १८॥

भा०—

अनलार्कद्युतिमित्युक्ते मितत्वशङ्कामपाकरोति॥ अप्रमेयमिति॥ १७॥ १८॥

---

1. क. 'आद्यन्त' इति न पाठः

प्र० दी०—

ननु अनलार्कद्युतिमित्युक्तत्वात् "सहस्रशब्दोऽनन्तवाची" इत्याद्युक्तमयुक्तमिति चेन्न। एतदेवाऽऽशङ्क्य प्रत्यायनार्थमेवैतदुक्तम्। वस्तुतस्त्वपरिच्छिन्नद्युतिरेव भगवानिति स्वयमेवोक्तत्वादित्याह ॥ अनलेति॥ इत्युक्ते जातां द्युतेर्मितत्वशङ्काम्। एतच्च सविशेषणविशेषणत्वात् द्युत्या सम्बध्यते ॥ १७॥ १८॥

भ० गी० —

अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम्।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम्॥ १९॥

भा०—

"शशिसूर्यनेत्रं" इत्यप्यहं क्रतुरित्यादिवत्।

"तदङ्गजाः सर्वसुरादयोऽपि तस्मा-
त्तदङ्गेति ऋषिभिस्स्तुतास्ते"

इति ऋग्वेदखिलेषु।

"चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजायत"

इति च। बहुरूपत्वाद्ब्रह्माश्रयत्वं[1] तेषां युक्तम्॥ १९॥

प्र० दी०—

"शशिसूर्यनेत्रं" इत्युक्तत्वात् कथं विश्वरूपशब्दस्यान्यथा व्याख्यानमित्यत आह ॥ शशीति॥ इत्यादिवत् व्याख्येयम्। जन्यजनकभावेनाऽऽश्रयाश्रयिभावेन वाऽभेदोक्तिरित्यर्थः। कुत एतदित्यत आह॥ तदङ्गजा इति॥ तदङ्ग इत्यविभक्तिको निर्देशः सम्बुद्धिर्वा। अभेदे बाधकं चाह ॥ चन्द्रमा इति॥ चक्षोः चक्षुषः। नन्वत्र चन्द्रमसो मनोजातत्वं तदाश्रयत्वं चोच्यते। गीतायां तु नेत्राश्रय-

1. अ. बह्वङ्गत्वात्

त्वादि। तथाऽन्यत्र "दंष्ट्राऽर्यमेन्दू" इति। तत्कुतो न विरोध इत्यत आह॥ वह्निति॥ १९॥

भ० गी०—

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः।
दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन्॥ २०॥

अमी हि त्वा सुरसंघा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति।
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः॥२१

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।
गन्धर्वयक्षाः[1] सुरसिद्धसंघाः
वीक्षन्ते त्वां[2] विस्मिताश्चैव सर्वे॥ २२॥

रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम्।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम्॥ २३॥

1. अ. गन्धर्वयक्षासुरसिद्धसंघाः 2. अ. त्वा

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां[1] प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥२४॥
दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५ ॥
अमी च त्वा धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥
वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥
यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८ ॥

1. अ. त्वा

यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

लेलिह्यसे ग्रसमानस्समन्ता-
ल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥

भा० —

"मातापित्रोरन्तरगः स एकः[1]रूपेण चान्यैः सर्वगतः स एकः" इति वारुणश्रुतेरेकेनैव[2] द्यावापृथिव्योरन्तरं व्याप्तो[3] भवति। "पश्य मे पार्थ रूपाणि" इति बहूनि[4] रूपाणि प्रतिज्ञातानि। मातापितरौ च पृथिवीद्यावौ।

"मा नो माता पृथिवी दुर्मतौ धात्"
"मधु द्यौरस्तु नः पिता" इत्यादिप्रयोगात्।

न तु नियमतो भयप्रदं तत्स्वरूपम्। नारदस्य तदभावात्। केषाञ्चित् तथा दर्शयति भगवान्।

"म्रियन्ति[5] केचित्तस्य रूपस्य दृष्टौ
बिभेति कश्चिदभ्यसे सर्वतृप्तिः"

इति वरुणशाखायाम्। न तु तं सर्वे पश्यन्ति। अदृष्ट्वाऽपि तन्निरूप्य भये द्रष्टुस्तथा प्रतिभाति। तथा च गौतमखिलेषु—

---

1. अ. रूपेण
2. अ. एकरूपेण
3. अ. प्राप्तो भवति
4. अ. बहूनि हि रूपाणि
5. अ. प्रीयन्ति

"दृष्ट्वा देवं मोदमाना अदृष्ट्वाऽप्येतद्भयात्
विभ्यतो दृष्टवत्ते।
पश्यन्ति ते[1] न्यस्तचक्षुर्मुखांस्तु
तस्मिन्नेवैते मनसो गतत्वात्"

इति ॥ २०-३० ॥

प्र० दी०—

"द्यावापृथिव्योरिदमन्तरं हि" इत्यत्र "त्वया" इत्यनेनैवैकत्वस्य सिद्धत्वात् "एकेन" इति व्यर्थमित्यतः प्रमाणपूर्वकं तदभिप्रायमाह ॥ मातापित्रोरिति ॥ बहुत्वेऽपि स एकोऽभिन्नः। अनेन दिशश्च सर्वाः रूपान्तरैरित्युक्तं भवति। तदयुक्तम्। विश्वरूपस्य "द्रष्टुमिच्छामि ते रूपं" इत्यादिनैकत्वावगतेरित्यत आह ॥ पश्येति ॥ ऐक्यापेक्षयैक-वचनमिति भावः। "मातापित्रोः" इति श्रुतिः प्रकृतानुपयोगिनी कथमुदाहृता। द्यावापृथिव्योरित्यनभिधानादित्यत आह ॥ माता-पितरौ चेति ॥ माता पृथिवी नोऽस्मान् दुर्मतौ मा धात् न दध्यात्। नोऽस्माकं मधु सुखहेतुरस्तु। "दृष्ट्वाऽद्भुतं" इत्यादिना विश्वरूप-दर्शनस्य भयहेतुत्वमुच्यते। तन्न सर्वेषां सर्वदा। किन्तु केषा-ञ्चित्कारणविशेषात् कदाचिदेवेति सप्रमाणकं तदभिप्रायमाह ॥ न त्विति ॥ अभ्यसे अभ्यासे सति सर्वेषां तृप्तिरानन्द एवेत्यर्थः। एवं तद्दर्शनस्य भयहेतुत्वनियमाभावमभिधाय लोकत्रयस्य दर्शनाभावं चाह ॥ न त्विति ॥ किन्तु त्रिलोकेषु स्थितैः भक्तैरित्युक्तप्रकारेण कैश्चिदेव। तदभिप्रायश्च लोकत्रयशब्द इति भावः। प्रकारान्तरेण लोकत्रयमित्यस्याभिप्रायमाह ॥ अदृष्ट्वापीति ॥ विश्वरूपदर्शनार्थं यत-मानानां लोकत्रयस्थानां पुंसां तददृष्ट्वाऽपि चेतसि निरूप्य स्थितानां भये जाते सति तद्द्रष्टुरर्जुनस्य तथाऽहमिव एतेऽपि दृष्ट्वा बिभ्यतीति प्रतिभातीत्यतो लोकत्रयं दृष्ट्वा प्रव्यथितमित्याहेत्यर्थः। अत्र श्रुति-सम्मतिमाह ॥ दृष्ट्वेति ॥ देवं विश्वरूपं दृष्ट्वा मोदमानाः त एतेऽर्जुनादयः

---

1. अ. तान्

तद्ध्यायिनः पश्यन्ति । कथम्? भूतानदृष्ट्वाऽपि तन्निरूप्यैतद्भया द्विभ्यतो भयचिह्नवतस्तस्मिन्नेव विश्वरूपे मनसो गतत्वात् तन्न्यस्त-चक्षुर्मुखांश्च दृष्टवत् दृष्टवन्त इवेत्यर्थः ॥ २०-३० ॥

भ० गी०—

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥

भा०—

धर्मान्तरज्ञानार्थमेव को भवानिति पृच्छति। यथा कश्चित् कश्चित् नामादिकम् । जानन्नपि जातिज्ञानार्थं पृच्छति "कस्त्वं" इति। यदि तमेव न जानाति तर्हि "विष्णो" इत्येव सम्बोधनं न स्यात्। "त्वमक्षरं" इत्यादि च ॥ ३१ ॥

प्र० दी०—

स्वरूपमेवाज्ञात्वा तद्धर्मान् वाऽयं पृच्छतीत्यन्यथाप्रतीतिनिरासार्थ-माह॥ धर्मान्तरेति॥ तर्हि किं धर्मान्तरो भवानिति प्रश्नेन भाव्यम्। को भवानिति तु न युज्यत इत्यत आह॥ यथेति॥ अन्येषां व्यव-हारान्नाम, प्रत्यक्षेण रूपादिकं जानन्नपि जातिज्ञानार्थं यथा कश्चित् कश्चित् कस्त्वमित्येव पृच्छति । तथाऽर्जुनो भगवन्तं तद्धर्मांश्च जानन्नपि धर्मान्तरज्ञानार्थं को भवानित्येव पृच्छतीत्यर्थः । प्रश्न-व्याख्यानस्य वर्तमानत्वाद्वर्तमाननिर्देशः । उग्रं रूपं दृष्ट्वा रुद्रो वा यमो वाऽयमिति स्वरूप एव सन्दिहानस्य प्रश्नः किं न स्यादित्यत आह॥ यदीति॥ तत्स्वरूपमेवेत्यर्थः । "भासस्तवोग्राः प्रतपन्ति विष्णो"

इति। तर्हि धर्मविषयोऽयं प्रश्नोऽस्तु। ततश्चान्तरशब्दो न युक्त इत्यत आह॥ त्वमिति॥ यदि भगवद्धर्मान्न जानीयात्तर्हि "त्वमक्षरं परमं" इत्यादिवर्णनं न स्यात्। अतो भगवन्तं तद्धर्मांश्चाक्षरत्वादीन् ज्ञात्वा तदन्यधर्मज्ञानार्थमेव प्रश्न इत्येवमुक्तमित्यर्थः ॥ ३१ ॥

भ० गी०—

श्रीभगवानुवाच—

कालोऽस्मि लोके क्षयकृत्प्रवृद्धो
लोकान् समाहर्तुमिह प्रवृत्तः।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुंक्ष्व राज्यं समृद्धम्।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥

भा०—

कालशब्दो जगद्बन्धनच्छेदनज्ञानादिसर्वभगवद्धर्मवाची। कल बन्धने कल च्छेदने कल ज्ञाने, कल कामधेनुः इति[1] पठन्ति। प्रसिद्धश्च स शब्दो भगवति।

"नियतं कालपाशेन बद्धं शक्र विकत्थसे।
अयं स पुरुषः श्यामो लोकस्य हरति प्रजाः।
बद्ध्वा तिष्ठति मां रौद्रः पशुं[2] रशनया यथा"॥

इति मोक्षधर्मे विष्णुना बद्धो बलिर्वक्ति।

---

1. अ. इति हि  2. अ. पशून्

"विष्णौ चाधीश्वरे चित्तं धारयन् कालनिग्रहे"

इति[1] भागवते।

प्र० दी०—

एवं तर्हि कालोऽस्मीत्युत्तरमयुक्तं; धर्मानुक्तेरित्यत आह ॥ कालेति॥ धर्मविशिष्टभगवद्वाचीत्यर्थः। कुत एतदित्यत आह॥ कालेति॥ यथा कामधेनुः सर्वार्थान् ददाति तथाऽयमपि धातुः सर्वार्थवाचीत्यर्थः। तथा चास्मादण्। कर्तरि घञ् वा। जगदिति योग्यतया सम्बध्यते। भवत्वयं बन्धनादिधर्मवद्वाची। भगवद्वाची तु कुतः। अन्यत्र रूढत्वादित्यत आह॥ प्रसिद्धश्चेति॥ वद्धं मां प्रति विकत्थसे। आत्मानं तु श्लाघसे। कः कालः। अयं कथम्। श्यामः प्रजा हरति। बद्ध्वा तिष्ठति, रौद्रश्चेति। अत्र कथं विष्णुवाचित्वनिश्चय इत्यत आह॥ विष्णुनेति॥ कालनामा विग्रहो यस्यासौ तथोक्तः।

भा०—

प्रवृद्धः परिपूर्णोऽनादिर्वा। ऋतं च सत्यं चाभीद्धादिति हि श्रुतिः। "एतन्महद्भूतं' इति च।

"प्रविष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नाम"

इति च। न तु वर्धनम्।

"जजान न मरिष्यति न एधतेऽसौ"

इति हि भागवते।

"यस्य दिव्यं हि तद्रूपं हीयते वर्धते न च"

इति मोक्षधर्मे। "न कर्मणा" इति तु, कर्मणापि न, किमु स्वयमिति। लोकान् समाहर्तुमिह विशेषेण प्रवृत्तः। भ्रात्रादींश्च ऋते इत्यपि शब्दः। प्रत्यनीकत्वं तु परस्परतया। सर्वेऽपि[2] न भविष्यन्ति। अक्षौहिण्यादिभेदेन बहुवचनं युक्तम्॥ ३२॥ ३३॥

---

1. अ. इति हि 2. अ. सर्वे हि

प्र० दी०—

"प्रवृद्ध" इति कादाचित्की वृद्धिः प्रतीयते ॥ अत आह ॥ प्रवृद्ध इति ॥ वृद्धिः धात्वर्थः । सा च प्रशब्देन[1] देशतः कालतश्च सदातनी विवक्षितेति भावः । "अनादिः" इति नित्यस्याप्युपलक्षणम् । भूताधिकारे विहितस्य क्तस्य कुतः सार्वकालिकत्वम् । प्रयोगदर्शनादिति भावेनाह ॥ क्तं चेति ॥ इद्धात् भूतमितिवदित्यर्थः । अत्रापि सार्वकालिकत्यानिश्चय[2] इत्यतो भगवतो दीप्तेः सत्तायाश्च सदातनत्वे श्रुतिसद्भावादित्याह ॥ प्रविष्णुरिति ॥ विष्णुः तवसो देशकालपरिच्छिन्नात् सूर्यादेस्तेजसः स्तवीयान् अतिशयिततेजोरूपो भवति । अत एव ह्यस्य स्थविरस्यानादिकालीनस्य त्वेषमिति नाम ॥ असाधारण्येन हि व्यपदेशाः भवन्तीत्यर्थः । अस्त्वेवं तथाऽपि प्रागल्पस्सन्निदानीं वृद्धिं गतः इत्यत्रार्थः किं न स्यादित्यत आह ॥ न त्विति ॥ तुशब्दो विशेषणार्थः । विक्रियारूपं वर्धनं प्रवृद्धशब्दप्रवृत्तिनिमित्तं न भवति । भगवति भावविकाराणां प्रतिषिद्धत्वात् । भगवतो विक्रियारूपवृद्ध्यभावेऽपि तद्रूपस्य भवतु इति । तत्राह ॥ यस्येति ॥ ननु "न कर्मणा वर्धते नो कनीयान्" इति श्रुतौ कर्मनिमित्तवृद्धिप्रतिषेधनात् वृद्धिमात्रमस्तीति ज्ञायते । अन्यथा विशेषणवैयर्थ्यात् । तथा च सत्प्रतिपक्षमुक्तवाक्यमित्यत आह ॥ नेति ॥ "न कर्मणा" इति विशेषनिषेधस्तु वृद्धिलक्षणविक्रियाकारणत्वेन । सम्भावितेन कर्मणाऽपि यदा न वर्धते तदा स्वयं कर्मणा विना न वर्धते इति किमु वक्तव्यमिति वृद्धिलक्षणविक्रियाकारणत्वमात्रनिषेधाय कैमुत्यप्रदर्शनार्थमित्यन्यथोपपन्नमित्यर्थः । ननु सर्वत्र भगवानेव लोकानां संहर्ता । तस्मात् "इह" इति व्यर्थमित्यत आह ॥ लोकानिति ॥ युगपत् बहून् प्रत्यक्षत एवेति विशेषेण । युधिष्ठिरादीनामवशिष्टत्वात् कथं "त्वां ऋते" इत्येवोक्तमित्यत आह ॥ भ्रात्रादींश्चेति ॥ अपिशब्दो द्योतयतीति शेषः । असत्प्रतिकूलेष्वनीकेष्ववस्थिता योधा न भविष्यन्तीत्युक्ते का पाण्ड-

---

1. ख. क्वचित् 'प्रशब्देन' इति न पठ्यते
2. ख. कथं सार्वकालिकत्वनिश्चय

वादीनां प्राप्तिः ; येन तेऽपि त्वयेत्युच्यन्त इत्यत आह ॥ प्रत्यनीकत्व-मिति ॥ सेनाद्वयस्यापीति शेषः । कुत एवं व्याख्यानमित्यत आह ॥ सर्वेति ॥ सेनाद्वयगता अपीत्यर्थः । प्रत्यनीकेष्विति बहुवचनं कथमित्यत आह ॥ अक्षौहिणीति ॥ भेदेन बहुत्वेन ॥ ३२ ॥ ३३ ॥

भ० गी०—

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथाऽन्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेताऽसि रणे सपत्नान् ॥ ३४ ॥

सञ्जय उवाच—

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाऽह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

भा०—

योऽस्य शिरश्छिन्नं भूमौ पातयति तच्छिरो भेत्स्यतीति तत्पितुर्वरात् जयद्रथोऽपि विशेषेणोक्तः । झवरा[1] वासवीशक्तिरिति कर्णः ॥ ३४ ॥ ३५ ॥

प्र० दी०—

"यद्वा जयेम यदि वा नो जयेयुः" इत्यस्य सन्देहेऽपि प्रवृत्ति-र्युक्ता । पक्षद्वयेऽपि फललाभादिति "हतो" वेत्युत्तरमुक्तम् । इदानीं तव पराजयशङ्कापि नास्तीत्युच्यते ॥ द्रोणं चेति ॥ तत्र

1. अ. सवरा

द्रोणस्य धनुर्विद्याचार्यत्वेन भीष्मस्य स्वच्छन्दमृत्युत्वेन चाऽशङ्का-विषयत्वाद्युक्तं योधवीरसमुदायात् पृथक्कृत्य स्वशब्देन ग्रहणम् । जयद्रथस्य कर्णस्य च कुत इत्यत आह ॥ योऽस्येति ॥ अस्य जयद्रथस्य तच्छिरः तस्य पातयितुः शिरो भेत्स्यति भेत्स्यते । तत्पितुः जयद्रथपितुः । शक्तिः, अस्ति कर्णस्येति शेषः । कर्णो विशेषेणोक्त इति वर्तते ॥३४॥३५॥

भ० गी०—

अर्जुन उवाच—

स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥ ३६ ॥

भा०—

यदेतद्वक्ष्यमाणं तत् स्थाने युक्तमेवेत्यर्थः । अग्नीषोमाद्यन्तर्यामितया जगद्धर्षणात् हृषीकेशः । केशत्वं त्वंशूनां तन्नियतत्वादेः । प्रमाणं तु "शशिसूर्यनेत्रं" इत्यत्रोक्तम् । हृषीकाणामिन्द्रियाणामीशत्वाच्च[1] । तेषां विशेषतः[2] ईशत्वं च "यः प्राणे तिष्ठन्" इत्यादौ प्रसिद्धम् ।

"न मे हृषीकाणि पतन्त्यसत्पथे"

इत्यादिप्रयोगाच्च । इतरोऽर्थो मोक्षधर्मे सिद्धः ।

"सूर्याचन्द्रमसौ शश्वत् केशैर्मे अंशुसञ्ज्ञितैः ।
बोधयन् स्थापयंश्चैव जगदुत्पद्यते पृथक् ।
बोधनात् स्थापनाच्चैव जगतो हर्षसम्भवात् ।

---

1. अ. चशब्दात् परतः "हृषीकेशः" इत्यधिकः पाठः ।

2. अ. विशेषेण

अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन ।
हृषीकेशो महेशानो वरदो लोकभावनः" ॥

इति च ॥ ३६ ॥

प्र० दी०—

स्थाने इत्येतद्युक्तमित्यर्थेऽव्ययं चास्ति। अस्ति च सप्तम्यन्तं पदम् । तत् किमत्राभिप्रेतम् । कथं चास्यान्वय इत्यत आह ॥ यदिति ॥ स्थाने विषये एवेति वा बहुमानस्थाने त्वयीति वा योजनायां साध्याहारत्वमिति भावः । हृषीकेशशब्दस्य प्रकृतोपयुक्तमपूर्वमर्थमाह ॥ अग्नीति ॥ अत्राऽद्येनादिशब्देन सूर्यो गृह्यते । द्वितीयेन बोधनस्थापने । अग्न्याद्यंशुभिः स्वकेशैरिति शेषः । जगद्धर्षणादेरिति बोधनस्थापनाभ्यां जगद्धर्षणादित्यर्थः। सूर्याद्यंशूनां कथं भगवत्केशत्वमित्यत आह ॥ केशत्वं त्विति ॥ तन्नियतत्वतज्जन्यत्वादिना तादात्म्योक्तिरित्यत्र किं प्रमाणमित्यत आह ॥ प्रमाणं त्विति ॥ इत्यत्र एतद्व्याख्यानावसरे। अनेन वक्ष्यमाणं वाक्यं विवृतं भवति । तथा च अग्न्यादिषु स्थित्वा स्वकेशनियतैस्तदंशुभिः जगतो बोधनस्थापनाभ्यां हर्षणादित्युक्तं भवति । हृष्यतेः कीप्रत्ययः । हृष्यो हर्षहेतवः केशाः अस्येति हृषीकेशः । नानेन प्रसिद्धोऽर्थः त्याज्यः इति भावेन तमप्याह ॥ हृषीकाणामिति ॥ ननु जगदीशस्य विशेषतः इन्द्रियेशत्वं कथमित्यत आह॥ तेषामिति ॥ पुरुषार्थोपयुक्तज्ञानक्रियाशक्तिप्रेरकत्वेनेति भावः। हृषीकशब्दस्येन्द्रियवाचित्वं कुत इत्यत आह ॥ नेति ॥ पूर्वेण समुच्चितस्यास्य व्याख्यानसमर्थहेतुत्वाच्चशब्दः । आद्येऽर्थे प्रमाणमाह ॥ इतरोऽर्थ इति ॥ अग्निश्च जगत् बोधयन्तो स्थापयन्तश्च पृथक् स्वावसरे उत्पद्यन्ते उदयं गच्छन्ति। सूर्यकृतैश्च। अत्रापि पूर्ववद्बोधनादेः हेतुहेतुमद्भावो ज्ञातव्यः । ईशानत्वादावप्युक्तो हेतुः ॥ ३६ ॥

भ० गी०—

कस्माच्च ते न नमेरन् महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥

त्वमादिदेवः पुरुषः पुराणः
त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वाऽपि ॥ ४१ ॥

भा०—

कथं स्थान इति। तदाह॥ कस्मादित्यादिना ॥ पूर्णश्चासावात्मा च इति महात्मा। आत्मशब्दश्चोक्तो भारते—

"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावः तस्मादात्मेति भण्यते"॥

इति। तत्परं सदसतः[1] परम्।

"असच्च सच्चैव यद्विश्वं सदसतः परं"

इति[2] भागवते॥ ३७॥ ३८॥ ३९॥ ४०॥ ४१॥

प्र० दी०—

सर्वे नमस्यन्तीत्येतद्युक्तमिति स्वयमेवोक्त्वा "कस्माच्च ते न नमेरन्" इति विरुद्धं कथं पृच्छतीत्यत आक्षेप एवायमिति ज्ञापयितुं तन्निवर्त्याशङ्काप्रदर्शनपूर्वकमवतारयति॥ कथमिति॥ इति शङ्कायामिति शेषः। तत् तस्या उत्तरम्। महात्मन् अक्षुद्रचित्त इत्यल्पार्थप्रतीतिनिरासार्थमाह॥ पूर्णश्चेति॥ आत्मा जीव इति प्रतीतिं निवारयितुमाह॥ आत्मेति॥ उक्तो निरुक्तः। यत् यस्मात्। आप्नोतेः मन्। पकारस्य च तकारः। आङ्पूर्वाद्दाञः स एव प्रत्ययः। आकारलोपः तत्वम्। आङ्पूर्वाददो मन्। तत्वं च। इह देहे। सन्ततो भावो नित्या सत्ता। आङ्पूर्वात् तनोतेः ड्मन्। सदसदात्मकं वस्तु त्वमेवेति सत्तादिप्रदत्वादेवोच्यते। न त्वन्यथा। तथा सति उत्तरवाक्यविरोधादिति भावेन तत्पठित्वा सप्रमाणकं व्याचष्टे॥ तत्परमिति॥ ३७॥ ३८॥ ३९॥ ४०॥४१॥

---

1. अ. सदसंतोः
2. अ. इति च भारते

भ० गी०—

यच्चापहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथ वाप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥
पिताऽसि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥
तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥
अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५ ॥
किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥

*

श्रीभगवानुवाच—

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ् ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

भा०—

एकस्त्वमेव कारयिता नान्योऽस्त्यथापि ॥ ४२-४९ ॥

प्र० दी०—

एकः परोक्ष इति क्लिष्टं व्याख्यानमिति ज्ञापयितुं तदर्थमन्वयं च दर्शयति ॥ एक इति ॥ आद्याक्षरग्रहणे एवशब्दः एकस्य द्योतकः । कशब्दः कारयितृत्वद्योतकः । अन्तर्णीतण्यर्थात् करोतेर्डः । अथाप्ये-वमसत्कारानर्होऽप्यसत्कृतोऽसि ॥ ४२-४९ ॥

भ० गी०—

सञ्जय उवाच—

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

अर्जुन उवाच—

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥

श्रीभगवानुवाच—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः॥ ५२॥

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥५३॥

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥ ५४ ॥

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥५५॥

॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नाम एकादशोऽध्यायः ॥११॥

भा०—

स्वकं रूपं तु भ्रान्तप्रतीत्या। अन्यथा तदपि स्वकमेव। प्रमाणानि तूक्तानि पुरस्तात् ॥ ५०-५५ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीता-भाष्ये एकादशोऽध्यायः ॥ ११ ॥

प्र० दी०—

"स्वकं रूपं दर्शयामास" इति कृष्णरूपस्य स्वकत्वविशेषणात् विश्वरूपं न स्वकमिति प्रतीतिः स्यात् अत आह ॥ स्वकमिति ॥ कृष्णः स्वकं रूपं न विश्वरूपमिति भ्रान्तप्रतीत्यनुवादेनोच्यत इत्यर्थः। कुत एतदित्यत आह ॥ अन्यथेति ॥ प्रमाणप्रतीत्येत्यर्थः। कानि तानि प्रमाणानीत्यत आह ॥ प्रमाणानीति ॥ द्वितीयान्ते ॥ ५०-५५ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां एकादशोऽध्यायः समाप्तः ॥ ११ ॥

## ॥ अथ द्वादशोऽध्यायः ॥

भ० गी०—

अर्जुन उवाच—

एवं सतत युक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

श्रीभगवानुवाच—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

भा०—

॥ हरिः ॐ ॥ अव्यक्तोपासनाद्भगवदुपासनस्योत्तमत्वं प्रदर्श्य तदुपायं प्रदर्शयत्यस्मिन्नध्याये । तदुपासनमपि[1] मोक्षसाधनं प्रतीयते ।

"श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या
समिथा मितद्रौ"

इति ।

"अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं
मृत्युमुखात्प्रमुच्यते"

इति च । अव्यक्तं च महतः परम् । "महतः परमव्यक्तं" इत्युक्तपरामर्शोपपत्तेः ।

"उपास्य तां श्रियमव्यक्तसंज्ञां भक्त्या मर्त्यो
मुच्यते सर्वबन्धैः"

इति सामवेदे आग्निवेश्यशाखायाम् ।

प्र० दी०—

॥ हरिः ॐ ॥ एतदध्यायप्रतिपाद्यमर्थमाह ॥ अव्यक्तेति ॥ अव्यक्तं

---

1. अ. अपि हि

श्रीः। तदुपायं भगवदुपासनोपायम्। तदुपायप्रदर्शनं च भगवदुपासनाधिक्यसमर्थनार्थमित्येकार्थता। षट्कान्तर्भावश्च। अर्जुनस्य प्रश्नसङ्गतिप्रदर्शनेनैवानन्तर्यलक्षणाऽपि सङ्गतिर्ज्ञायते। ननु भगवदुपासनमिवाव्यक्तोपासनमपि यदि मोक्षसाधनत्वेन प्रमितं स्यात्तदा तत्साधकाधिक्यविषयः संशयः स्यात्। तदेव कुतः? तथा च कथमयं संशयमूलोऽर्जुनस्य प्रश्नः। न हि भिन्नफलसाधनसाधकानां निर्धारणार्थः प्रश्नो युज्यते। किन्तु साध्यनिर्धारणार्थ एव। न च तथा प्रकृतो "यावानर्थ" इत्यादिना निरस्तत्वादित्यत आह॥ तदुपासनमिति॥ श्रियं प्रति वसाना वसन्तः तामाच्छाद्य स्थिता वा उपासीना इति यावत्। तेषां समिथा समीहितानि सत्यानि भवन्ति। मितद्रौ समुद्रे क्षीराब्धौ। श्रीशब्दस्यान्यत्रापि प्रवृत्तेरव्यक्तविषयामेव श्रुतिं पठति॥ अनादीति॥ निचाय्य सम्पूज्य निशाम्य वा। अत्रापि नाव्यक्तं श्रूयत इत्यत आह॥ अव्यक्तं चेति॥ चोऽवधारणे। कुत एतत्; परमात्मनोऽपि तत्सम्भवादित्यत आह॥ महत इति॥ अत्र हि "तं महतः परं" इति परामर्शो दृश्यते। स चोक्तस्यैव भवति। अव्यक्तमेव च "महतः परमव्यक्तं" इति महतः परत्वेनोक्तम्। अतोऽत्राप्यव्यक्तग्रहणे "तं" इत्ययं "महतः परमव्यक्तं" इत्युक्तस्य परामर्श इत्युपपद्यते। अन्यथाऽनुक्तपरामर्शः प्रसज्यते। परमात्मा तु न महतः पर इत्युक्तः। किन्तु "अव्यक्तात्पुरुषः परः" इत्येवेत्यर्थः। श्रुतिद्वयार्थसङ्ग्राहिकां स्पष्टां चात्र श्रुतिमुदाहरति॥ उपास्येति॥

भा०—

महत्तच्च माहात्म्यं तस्या वेदेषूच्यते।

"चतुष्कपर्दा युवतिः सुपेशा
घृतप्रतीका वयुनानि वस्ते।
तस्यां सुपर्णा वृषणा निषेदतु-
र्यत्र देवा दधिरे भागधेयम्"।

"चतुःशिखण्डा युवतिः सुपेशा
घृतप्रतीका वयुनानि वस्ते[1]"।

इति च।

"अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः"

इत्यारभ्य।

"अहं राष्ट्री सङ्गमनी वसूनां
चिकितुषी प्रथमा यज्ञियानाम्।
तां मा देवा व्यदधुः पुरुत्र
भूरि स्थात्रां भूर्या वेशयन्तीम्।
मया सो अन्नमत्ति यो विपश्यति
यः प्राणिति य ईं शृणोत्युक्तम्।
अमन्तवो मां त उपक्षियन्ति
श्रुधि श्रुतश्रद्धिवं ते वदामि।
यं कामये तं तमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम्[1]।
अहं रुद्राय धनुरातनोमि
ब्रह्मद्विषे शरवे हन्त वा उ।
अहं सुवे पितरमस्य मूर्धन्
मम योनिरप्स्वा अन्तः समुद्रे।
परो दिवा पर एना पृथिव्यै
तावती महिना सम्बभूव"

इत्यादि च।

"त्वया जुष्ट ऋषिर्भवति देवि
त्वया ब्रह्मा गतश्रीरुत त्वया"।

इति च।

---

1. अ. वयुनानि वस्ते इत्यतः परं पुनः "तस्यां सुपर्णा" इत्यादि मन्त्रभागः पठ्यते।

1. सुमेधाम्

प्र० दी०—

नन्वेवं प्रतीयमानमप्यव्यक्तोपासनस्य मोक्षसाधनत्वमुपचरितमेव। "अन्तवत्तु फलं तेषां" इत्युक्तन्यायात्। अतो नास्य संदेहहेतुत्वमित्यत आह ॥ महद्वेति ॥ तस्याः श्रियः। युक्तं ब्रह्माद्युपासनस्य मोक्षसाधनतायामुपचरितत्वकल्पनम्। तेषां जननमरणादिमत्त्वेनासम्भवात्। श्रियस्तु महामाहात्म्यवत्त्वेन वेदोक्तत्वादसम्भवाभावाद्वास्तवमेव तदुपासनस्य मोक्षसाधनत्वमित्यर्थः। सुपेशा सुरूपा। घृतप्रतीका दीप्ताङ्गी। वयुनानि ज्ञानानि वस्ते आच्छादयति। ज्ञानालङ्कृता इति यावत्। सुपर्णा सुष्ठु परमानन्दौ वृषणा सेचकौ, द्विरूपो भगवानेव। यत्र यस्यां विषये। अत्र नित्ययौवनं, ज्ञानमयत्वं, सर्वदेवतापूज्यत्वं च प्रतीयते। एवमुत्तरत्र। रुद्राद्यैः परिवृता। राष्ट्री राज्ञी। यज्ञियानां यज्ञार्हाणां वसूनां पदार्थानाम् देवानां वा। सङ्गमनी सङ्गमयित्री। प्रथमा चिकितुषी अनादितः सर्वत्र कृतनिवासा। पुरुत्र पुरुस्थानेषु। व्यदधुः कृतवन्तः पूजार्थं प्रतिष्ठापितवन्तः। भूरिस्थात्रां स्वतो भूरिस्थानेषु स्थिताम्। भूरिस्थानेषु देवानावेशयन्तीम्। योऽन्नमत्ति स मयैवात्तीत्यादि। ये अमन्तवो निरपराधास्ते मामुपक्षयन्ति मत्समीपे वसन्ति। श्रुधि श्रृणु। श्रुतः प्रसिद्धः। श्रद्धिवं श्रद्धेयम्। यमुग्रं रुद्रं कर्तुं कामये तं तमुग्रं कृणोमि करोमीत्यादि। सुमेधां सुमेधसम्। रुद्रायेत्यादिचतुर्थी द्वितीयार्थे। ब्रह्मद्विषे संहारकाले ब्राह्मणादिसर्वप्राणिद्विषम्। यद्वा ब्रह्मद्विषां शरवे हिंसकं हन्तवा उ हन्तुमेव। अस्य जगतः पितरं हिरण्यगर्भं मूर्धनि सर्वाधिक्ये। योनिः कारणम्। दिवा इत्यादितृतीया पञ्चम्यर्थे। एना एतस्याः। महिना महिम्नाऽहमेतावती सम्बभूवेत्यादिनोच्यते।

भा०—

इति शङ्का कस्यचिद्भवति। अतो जानन्नपि सूक्ष्मयुक्तिज्ञानार्थं पृच्छति। **एवमिति**॥ एवंशब्देन दृष्टश्रुतरूपं मत्कर्मकृदित्यादिप्रकारश्च परामृश्यते। अव्यक्तं प्रकृतिः। महतः परमव्यक्तमिति प्रयोगात्।

"यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्"।

इति च भागवते। अक्षरं च तत्। "अक्षरात् परतः परः" इति श्रुतेः।

प्र० दी०—

भवत्वेवं ततः किम्। असन्दिग्धतया भगवन्तमेवोपासीनस्यार्जुनस्य कथमयं संशयः येनैवं पृच्छतीत्यत आह॥ इतीति॥ यत एवं भगवदुपासनस्येवाव्यक्तोपासनस्यापि विनोपचारेण मोक्षसाधनत्वं प्रतीयत इति; तस्मान्मार्गद्वयेनैकमेव फलं प्राप्नुवतां मध्ये के श्रेष्ठा इति साधकबाधकप्रमाणाभावेन शङ्का संशयः कस्यचिदविदिततत्त्वस्य भवति। अतस्तदनुजिघृक्षया भगवदुपासका एव श्रेष्ठा इति जानन्नप्यर्जुनः पृच्छतीत्यर्थः। अथवा जानन्नपि तत्र स्वाविदितयुक्तिज्ञानार्थं संशयमाहृत्य पृच्छतीत्याह॥ सूक्ष्मेति॥ योग्यतावशादेवम्भूतं त्वामेवंप्रकारेणोपासत इत्युभयत्रैवंशब्दस्यान्वय इत्याशयवानाह॥ एवमिति॥ दृष्टं श्रुतं च रूपं[1] यस्य ब्रह्मणः तत्तथा। अव्यक्ताक्षरशब्दयोरपव्याख्यानं निराकर्तुमर्थं तावदाह॥ अव्यक्तमिति॥ प्रकृतिश्चेतना। त्रिगुणं त्रिगुणाभिमानित्वात्[2]। सदसदात्मकं कार्यकारणाभिमानित्वात्। अविशेषमकार्यम्। ततः प्रधानं प्राहुः। विशेषवत् कार्यवत्। ततः प्रकृतिं प्राहुः। तत्प्रकृत्याख्यं तत्त्वम्। परतः परः अत्युत्तमः। अत्र "अव्यक्तं" इति विशेष्यवाची। "अक्षरं" इति विशेषणवाची। "अव्यक्तासक्तचेतसां", "अव्यक्ता हि गतिः" इत्यादिवचनात्। अतो व्युत्क्रमेण व्याख्यानम्। विशेषणोपादानं च देवान्तरवैलक्षण्यप्रदर्शनेन प्रश्नसम्भावनार्थम्। एतदेव भाष्यकृता "महच्च" इत्यादिना प्रपञ्चितम्।

---

1. क. रूपमित्यतः परः 'स्वरूपं' इत्यधिकः पाठः
2. क. गुणत्रयाभिमानित्वात्

भा०—

परं तु ब्रह्म न हि भगवतोऽन्यत्।

"आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे"

इति भागवते।· रूपं चेदृशं साधितं पुरस्तात्। उपासनं च तथैव कार्यम्।

"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।

इत्यारभ्य।

"तमेवं विद्वानमृत इह भवन्ति नान्यः पन्था अयनाय विद्यते"

इति साभ्यासा। आदित्यवर्णत्वादिश्च न वृथोपचारत्वेनाङ्गीकार्यः। तथा च सामवेदे सौकरायणश्रुतिः—

"स्थाणुर्ह वै प्राजापत्यः स प्रजापतिं पितरमेत्य उवाच।
मुमुक्षुभिः साधुभिः पूतपापैः किमु ह वै तारकं तारवाच्यम्।
ध्यानं च तस्यास्तरुचेः कथं स्यात्
ध्येयश्च कः पुरुषोऽलोमपाद इति।
तं होवाच एष वै विष्णुः तारको
अलोमपादो ध्यानं च तस्यास्तरुचेर्वदामि।
सोऽनन्तशीर्षो बहुवर्णः सुवर्णः
ध्येयः स वै लोहितादित्यवर्णः।
श्यामोऽथ वा हृदये सोऽष्टबाहु-
रनन्तवीर्योऽनन्तबलः पुराणः"॥

इति[1]। अरूपत्वादेस्तु गतिरुक्ता। पुरुषभेदश्च प्रश्नादौ प्रतीयते "त्वां पर्युपासते", "चाप्यक्षरमव्यक्तं"[2] इत्यादौ॥ १॥ २॥

प्र० दी०—

अन्ये तु ये त्वां भगवन्तं वासुदेवमुपासते, ये चाप्यक्षरमव्यक्तं परं ब्रह्म, तेषां के योगवित्तमा इति व्याचक्षते। तदसदित्याह॥

1. अ. इत्यादि च 2. "ये चाप्यक्षरं" इत्यादौ

परं त्विति ॥ "आनन्दं इत्यादेः पूर्वेणोत्तरेणचान्वयो द्रष्टव्यः। तथा च ये त्वां पर्युपासते ये च त्वामित्युक्तं स्यात्। तथा चोन्मत्तप्रलापत्व-प्रसङ्ग इति भावः। ननु भगवान् करचरणादिमद्रूपवान्। परं ब्रह्म तु नेदृशरूपवत्। "अशब्दमस्पर्शमरूपं" इत्यादिश्रुतेः। अतः कथ-मेतदित्यत आह॥ रूपं चेति॥ पराभ्युपगतस्य ब्रह्मणोऽपीति शेषः। अस्तु भगवानेव परं ब्रह्म। किन्तु ये त्वामेवं साकारमुपासते, ये चाव्यक्तं निराकारं तेषां के योगवित्तमा इति प्रश्नार्थ इत्यत आह॥ उपासनं चेति॥ तथैव रूपवत्तयैव। स्यादयं प्रश्नार्थः यदिरूपवत्त्वा-रूपवत्त्वाभ्यां भगवदुपासनं कार्यं स्यात्। न त्वैतदस्ति। किन्तु रूप-वत्तयैव। अन्यस्य मिथ्योपासनत्वेनानर्थहेतुत्वादिति भावः। कुत एतदित्यत आह॥ सहस्रेति॥ आरभ्य इत्यनेन "ब्राह्मणोऽस्य मुखं" इत्यादेः, आदित्यवर्णं तमसः पुरस्तात्" इत्यादेश्च ग्रहणम्। अभ्यास-शब्देन तत्फलनियमो लक्ष्यते। श्रुतिः साकारोपासनं मोक्षसाधन-माहेति शेषः। नन्वत्रोच्यमान आदित्यवर्णत्वादिः आकारः अतमस्क-त्वादिसादृश्यादुपचरित एवेत्यत आह॥ आदित्येति॥ वृथा बाधकेन विना। उपचर्यत इत्युपचारः। केचित् "सहस्रशीर्ष" इत्यादिकं हिरण्यगर्भविषयमिति मन्यन्ते। अतस्तद्विधूये[1]श्वरविषयतया स्वमितं गृहीतुं[2] आदित्य इत्याद्युक्तम्। उपचारानर्हां चात्र श्रुतिमाह॥ तथा चेति॥ स्थाणुः रुद्रः। प्राजापत्यः प्रजापतेरपत्यम्। साधुभिः साधकैः। तारकं संसारस्य। तारः ॐ कारः। आत्तरुचेः व्यात्त-तेजसः। "लोम" इति केशवचनम्। 'लोमपाद' इति द्वन्द्वः। न विद्यन्ते लोमान्तपादाद्यवयवाः यस्यासावलोमपादः। तं स्थाणु-मुवाच प्रजापतिः। सुवर्णः सुवर्णवर्णः। अत्र ममुमुक्षुभिः को ध्येयः? इत्येकः प्रश्नः। तारवाच्यं तारकं वस्तु किमिति द्वितीयः। तस्य ध्यानं कथं स्यात्? किं साकारतया, उत निराकारत्वेन? नाद्यः? अलोमपादो ह्यसावुच्यते, न द्वितीयः, बुद्धावनारोहात् इति तृतीयः। तत्राद्यद्वितीययोरर्थतो न भेदः। तारकस्यैव मुमुक्षुध्येयत्वादि-

1. क. विहाय 2. गृहीत्वा

त्यभिप्रेत्य द्वयोरेकमेवोत्तरमाह "यः त्वया मुमुक्षुध्येयः तारकः पृष्टः एषः विष्णुः" इति । "यद्यप्यसावलोमपाद उच्यते तथाऽपि तस्य साकारस्यैव ध्यानं वदामि" इति तृतीयस्य । यदि ब्रह्म साकारमेव तद्ध्यानं च तथैव कार्यम् तर्हि "अशब्दमस्पर्शमरूपमव्ययम्" इत्यादेः का गतिरित्यत आह ॥ अरूपत्वादेस्त्विति ॥ लौकिकरूपाद्यभावरूपा । एतेन अलोमपाद इत्यस्याभिप्रायोऽप्युक्तो भवति । इतोऽपि न परोक्तः प्रश्नार्थ इत्याह ॥ पुरुषेति ॥ एवं हि व्याख्याने ध्येयस्यैव[1] ध्यानं द्वेधेत्युक्तं स्यात् । अत्र तु ध्येयौ पुरुषौ द्वौ प्रतीयते । अतश्च नैवमित्यर्थः । प्रश्नस्य एकध्येय विषयतया कथंचिद्व्याख्यानेऽप्युत्तरं निरवकाशमित्याशयेनादिग्रहणं कृतम् । किञ्च साकारोपासनेन विशुद्धाशये निराकारमुपास्ते इत्येकस्यैव क्रमेण ध्येयद्वयमिति परेषां सिद्धान्तः । अत्र तूपासकपुरुषभेदः प्रतीयते । ततोऽपि नान्योऽर्थ इत्याह ॥ पुरुषेति ॥ उत्तरापव्याख्याननिराकरणं तु तात्पर्यनिर्णय इत्युक्तमेव व्याख्यानमिति स्थितम् ॥ १ ॥ २ ॥

भ० गी०—

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

भा०—

भवन्तु त्वदुपासका एवोत्तमाः । इतरेषां तु किं फलमित्यत आह ॥ ये त्वित्यादिना ॥ अनिर्देश्यत्वं चोक्तं भागवते मायायाः "अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः" इति ।

1. एकस्य एव

ईश्वरस्तु दैवशब्देनोक्तः "दैवमन्ये परे" इत्यत्र। उक्तं च सामवेदे काषायणश्रुतौ "नासदासीन्नोसदासीत्तदानीं" इति।

"न महाभूतं नोपभूतं तदाऽसीत्"

इत्यारभ्य "तम आसीत्तमसः गूह्ळमग्रे" इति। "तमो ह्यव्यक्तमजरमनिर्देश्यमेषा ह्येव प्रकृतिः" इति। सर्वगाचिन्त्यादिलक्षणा हि सा। तथा हि मोक्षधर्मे—

"नारायणागुणाश्रयादजरादतीन्द्रिया-
दग्राह्यदसम्भवतः।
असत्यादहिंस्रात् ललामात् द्वितीयप्रवृत्तिविशेषाद-
वैरादक्षयादमरादक्षरादमूर्तितः।
सर्वस्याः सर्वकर्तुः शाश्वततमसः"

इति।

"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः"॥

इति[1] मानवे। "कूटस्थोऽक्षर उच्यते" इति वक्ष्यति। कूटे आकाशे स्थिता कूटस्था।

"आकाशे संस्थिता त्वेषा ततः कूटस्थिता मता"

इति हि ऋग्वेदखिलेषु।

"सा सर्वगा निश्चला लोकयोनिः
साचाक्षरा विश्वगा विरजस्का[2]"।

इति सामवेदे गौपवनशाखायाम्॥ ३॥ ४॥

प्र० दी०—

एवं तर्हि "मय्यावेश्य" इत्यनेनैव मदुपासका एव उत्तमा इति प्रश्नस्य उत्तरं जातम्। किमुत्तरेण वाक्येनेत्यत आह॥ भवन्तु इति॥

---

1. इति च मानवे 2. वीरजस्का

आक्षेपगर्भोऽयमभ्युपगमः। न युक्तं त्वदुपासकानामेवोऽत्तमत्वमिति भावः। तदुपपादनाय पृच्छति॥ इतरेषामिति॥ अव्यक्तोपासकानां किं फलं मोक्षोऽस्ति वा न वा। न चेदुदाहृतवाक्यविरोधः[1]। आद्ये कथं त्वदुपासकानामुत्तमत्वं फलसाम्यादिति भावः। नन्वेषां विशेषणानां ब्रह्मणोऽन्यत्रासम्भवात्कथं "इतरेषां किं फलं" इत्यस्योत्तरत्वेनेतदवतार इत्यतोऽक्षराव्यक्तत्वयोः मायायामुपपादितत्वादन्यानि तत्रोपपादयन्ननिर्देश्यत्वं तावदुपपादयति॥ अनिर्देश्यत्वं चेति॥ शब्दागोचरत्वम्। धर्मस्य मम पादभङ्ग इत्यन्वयः। नन्वत्रापीश्वरोऽस्त्वनिर्देश्य इत्यत आह॥ ईश्वरस्त्विति॥ दैवं पादभङ्गकारणमाहुः। तथा च पुनरुक्तिः। स्यादिति भावः। न च दैवशब्दोऽदृष्टवाची। तस्य "अपरे[2] कर्म" इति पृथगुक्तत्वात्। मायाया अनिर्देश्यत्वे स्पष्टं च प्रमाणमाह॥ उक्तं चेति॥ महाभूतमाकाशवायुरूपम्। उपभूतं तेजोऽब्भूलक्षणम्[3]। तदा प्रलये। अजरमित्यादिकं प्रलयेऽवस्थानस्योपपादकम्। न च एतद्ब्रह्म इति प्रदर्शनाय "एषा ह्येव प्रकृतिः" इत्युदाहृतम्। इदानीं सर्वत्रमित्यादिकं मायायामुपपादयितुमाह॥ सर्वगेति॥ भावप्रधानो निर्देशः। स्वरूपवाची वा लक्षणशब्दः आश्रयो यस्य तत्तथोक्तम्। अनेन ब्रह्मणो व्यावृत्तिः। 'अजरात्' 'अमरात्' इति जडप्रधानादेः। तस्य तत्प्राप्त्यभावात्। अग्राह्यान्मनसोऽप्यगोचरादित्यनेनाचिन्त्यमिति सिध्यति। 'असम्भवतो" 'अक्षयात्', 'अक्षरात्' इति ध्रुवत्वसिद्धिः। असति प्रलये भवं असत्यम्। ललामं प्रधानम्। द्वितीया भगवदेकाधीना प्रवृत्तिः विशेषो यस्य तत्तथा। अमूर्तितः प्राकृतदेहरहितात्। सर्वस्याः सर्वगायाः इति छान्दसो लिङ्गव्यत्ययः। अनाद्यविद्याभिमानित्वाच्छाश्वततमसः। पुरुषोऽभूदित्यन्वयः। इदं प्रसिद्धं तमो मायाख्यं प्रलये सर्वतः प्रसुप्तमिव निर्व्यापारमासीत्। अभूतमजातम्। अप्रज्ञातमित्यादिना प्रत्यक्षानुमानागमवेद्यत्वाभाव उच्यते। अवेद्यलक्षणत्वाद-

1. क. 'चतुरूपर्दाहं' इत्यादि उदाहृतवाक्यविरोधः

2. ग, परे 3. तेजोऽब्जलक्षणम्

प्रतर्क्यम् । अनेन सर्वत्रगमचिन्त्यं ध्रुवमिति सिध्यति । गीतावाक्येन कूटस्थत्वं नित्यत्वं चेत् 'ध्रुवं' इति पुनरुक्तिः । कूटमनृतं तिष्ठत्यस्मिन्नित्यसम्भवीत्यत आह ॥ कूट इति ॥ कूटशब्दस्याकाशवाचित्वेऽभिधानं प्राक् पठितम् । तथाऽपि दार्ढ्याय श्रुत्युदाहरणम् । श्रुत्यनुसारेण स्त्रीलिङ्गम् । "सा सर्वगा" इत्युक्तार्थे स्पष्टं प्रमाणम् । निश्चला स्वपदादभ्रष्टा । विश्वं गतमाश्रितमस्यामिति विश्वगा । एतानि चोक्तविशेषणानि तदुपासनस्य मोक्षसाधनत्वाङ्गीकारसमर्थनार्थानीति ज्ञेयम् ॥ ३ ॥ ४ ॥

भ० गी०—

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

भा०—

कथं तर्हि त्वदुपासकानामुत्तमत्वमित्यत आह ॥ क्लेश इति ॥ अव्यक्ता गतिः दुःखं ह्यवाप्यते । गतिः मार्गः । अव्यक्तोपासनद्वारको मत्प्राप्तिमार्गो दुःखमवाप्यत इत्यर्थः । अतिशयेनोपासनसर्वेन्द्रियातिनियमनसर्वसमबुद्धिसर्वभूतहितकरत्वातिशुद्धाचारसम्यग्विष्णुभक्त्यादिसाधनसन्दर्भमृते नाव्यक्तापरोक्षम् । तदृते च न विष्णुप्रसादः । सत्यपि तस्मिन्न सम्यग् भगवदुपासनं ऋते । नर्ते च तं मोक्षः । विनाऽव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्ष इति क्लेशिष्ठोऽयं मार्ग इति भावः । तथाऽप्यपरोक्षीकृताव्यक्तानां सुकरं भगवदुपासनं इत्येव[1] प्रयोजनम् । तत्रापि योऽव्यक्तापरोक्षे प्रयासः तावता प्रयासेन यदि भगवन्तमुपास्ते ऊनेन वा तदा भगवदपरोक्षमेव भवतीति द्वितीयमधिकम् । इन्द्रियसंयमाद्यूनभावेऽप्युपासकस्यापि देवी नातिप्रसादमेति । देवस्तु तानि साधनानि

1. अ. इत्येतावत्

भक्तिमतः स्वयमेव प्रयत्नेन[1] ददातीति सौकर्य[2]मिति भक्तानां भगवदुपासने। इतरत्र तु क्लेशोऽधिकतरः। तदेतत्सर्वं 'पर्युपासते', 'सन्नियम्य', 'अधिकतर' इवि परिसंतरपशब्दैः प्रतीयते।

प्र० दी०—

नन्वितरेषां किं फलम्? इत्यस्य प्रश्नस्य "ते प्राप्नुवन्ति मामेव" इत्युत्तरं दत्तम्। तत्किमुत्तरेणेत्यत आह॥ कथमिति॥ पूर्ववाक्ये पक्षग्रहणमात्रं कृतम्। न तु तत्राभिप्रेतस्य दोषस्य परिहारः। अतः पूर्वपक्षिणा अभिप्रायोद्घाटने कृते तत्समाधानमाहेति भावः। तर्हु-भयेषां फलसाम्ये। यद्यप्येषा शङ्का पूर्ववाक्ये परिहृता। पर्यादि-शब्दप्रयोगात्। तथा च वक्ष्यति। तथाऽपि साध्यस्यानुक्तत्वाद्धेतु-वचनं स्वरूपकथनं मन्यमानस्य भवत्येव पुनः शङ्का। उत्तरार्धे पदानां व्यवहितत्वादन्वयाप्रतीतौ तमाह॥ अव्यक्तेति॥ अनेन 'दुःखं' इत्यस्य क्रियाविशेषणत्वमुक्तम्। गतिशब्दस्य अकर्तरि कारके भावे च प्रयोगादत्र विवक्षितमर्थमाह॥ गतिरिति॥ गम्यते अनेनेति व्युत्पादनादुपायो गतिरित्यर्थः। ननु मार्गस्याव्यक्तत्वं कथमुच्यते। कुतश्च गम्यार्थता गतिशब्दस्य त्यज्यत इत्यत आह॥ अव्यक्तेति॥ अव्यक्तोपासनं द्वारमुपायो यस्यासौ तथोक्तः। अव्यक्तोपासनानन्तर-भावि यद्भगवदुपासनं तदेवमुच्यते। अनेनाव्यक्तशब्दः तदुपासनं लक्षयति। तेन च तद्द्वारकत्वं लक्ष्यते। गम्यार्थतायां च गति-शब्दस्याव्यक्ताख्यं गम्यमित्युक्तं स्यात्। न च तद्युक्तम्। "ते प्राप्नुवन्ति मामेव" इति भगवत्प्राप्तेरुक्तत्वादित्युक्तं भवति। अत्र पूर्वार्धेऽस्य मार्गस्याधिकतरक्लेशवत्त्वं प्रतिज्ञाय कथमित्यतस्तत्प्रसिद्ध-मित्युत्तरार्धेनोक्तम्। तत्प्रसिद्धिं[3] विवृणोति॥ अतिशयेति॥ षष्ठोक्त-प्रकारेण सर्वसमबुद्धिः। ततः किमित्यत आह॥ तदते चेति॥ अयोगव्यवच्छेद एवायमुक्तो न तु तावन्मात्रेणेत्याह॥ सत्यपीति॥ तस्मिन्नव्यक्तापरोक्ष्ये सति विष्णुप्रसाद इति वर्तते। ततोऽपि

1. अ. अप्रयत्नेन 2. अ. अतिसौकर्यम् 3. ख. तं प्रसिद्धम्

किमित्यत आह ॥ नर्ते चेति ॥ तं विष्णुप्रसादम् । अस्त्वेवमव्यक्तोपासनद्वारकभगवत्प्राप्तिमार्गप्रकारः । तथाऽपि कथमत्राधिकः क्लेशः इत्यत आह ॥ विनेति ॥ अव्यक्तोपासनमार्गम् । अयमव्यक्तोपासनद्वारकः[1] । एवं तर्हि किमिति प्रवृत्तो, येनार्जुनेनाशङ्कित इत्यत आह ॥ तथाऽपीति ॥ एवं तर्हि मार्गयोः साम्यमेव । अनेन प्रयोजनेन क्लेशस्य समाधानादित्यत आह ॥ तत्रापीति ॥ अव्यक्तोपासनद्वारके मार्गेऽपि । द्वितीयं भगवदुपासने दुःखं पाक्षिक[2]मेतत् । ऊनेन वेत्युक्तत्वात् । इतश्चाव्यक्तोपासनद्वारके मार्गे भगवदुपासनात् क्लेशोऽधिकतर इत्याह ॥ इन्द्रियेति ॥ नातिप्रसादमेतीत्यतः परमेक इति शब्दः । द्वावपि हेतौ प्रकारार्थौ वा । कुतोऽयं भगवतो भाव इत्यत आह ॥ तदेतदिति ॥ उपलक्षणमेतत् । "सर्वत्र समबुद्धय" इत्यादिनेत्यपि द्रष्टव्यम् । अत्र 'परि' इत्यनेनोपासकस्यातिशयः । "सं" इत्यनेनेन्द्रियनियमस्यातिशयः । 'सर्वत्र' इत्यादिना सर्वेत्यादिकम् । तरपाऽतिसुष्ठ्वाचारादिकम् । "अव्यक्ता गतिः" इत्यनेन "तद्दते च" इत्यादि व्यवधानम् । 'मामेव' इत्यवधारणेन तथाऽपीत्यादिकं प्राप्नुवन्तीति स्वातन्त्र्योक्त्येन्द्रियसंयमादिति[3] देवतासहायाभावः । भगवदुपासने त्वेतदभावो यथा गीतोक्तः तदुत्तरत्र प्रदर्शयिष्यते ।

भा०—

सामवेदे माधुच्छन्दसशाखायां चोक्तम् ।

"भक्ताश्च येऽतीव विष्णावतीव
जितेन्द्रियाः सम्यगाचारयुक्ताः ।
उपासते तां समबुद्धयश्च
तेषां देवी दृश्यते नेतरेषाम् ।
दृष्टा च सा भक्तिमतीव विष्णौ
दत्वोपास्ते[4] सर्वविघ्नान् छिनत्ति ।

---

1. क. ख. अव्यक्तोपासनद्वारयुतः    2. ख. पाक्षिकमेव
3. ख. इन्द्रियसंयमनादीति    4. अ. उपास्तौ

*

उपास्य तं वासुदेवं विदित्वा
ततस्ततः शान्तिमत्यन्तमेति ”॥

इति। उक्तं च सामवेदे आयास्यशाखायाम्—

“प्रसन्नो भविता देवः सोऽव्यक्तेन सहैव तु।
यावता तत्प्रसादो हि तावतैव न संशयः।
न तत्प्रसादमात्रेण प्रीयते स महेश्वरः।
तस्मिन् प्रीते तु सर्वस्य प्रीतिस्तु भवति ध्रुवम्।
यद्यप्युपासनाधिक्यं तथाऽपि गुणदो हि सः।
मुक्तिदश्च स एवैको नाव्यक्तादिस्तु कश्चन”।

इति।

“ममात्मभावमिच्छन्तो यतन्ते परमात्मनः”

इति मोक्षधर्मे श्रीवचनम्।

“धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि।
प्रश्रिते दानशीले च सदैव निवसाम्यहम्”॥

इति च। महतः परं तु ब्रह्मैव। तथा हि भगवता सयुक्तिकमभिहितम्। “ॐ वदतीति चेन्न प्राज्ञो हि ॐ” “त्रयाणामेव चैवमुपन्यासः प्रश्नश्च” इत्यादि। “तं” इति पुल्लिंगाच्चैतत्सिद्धिः। महतः परत्वं त्वव्यक्तपरस्य भवत्येव। तथा चाग्निवेश्यशाखायाम्— “अनाद्यनन्तं महतः परं ध्रुवं” इति “परो हि देवो पुरुहूतो महत्त” इति।

प्र० दी०—

आगमान्तरसिद्धत्वाच्चायं भवति भगवदभिप्राय इत्याह॥ सामवेद इति॥ तेषामित्यादिषष्ठी तृतीयार्थे। विदित्वा साक्षात्कृत्य। ततो वेदनात्प्रसन्नात्ततो वासुदेवात्। यावता प्रयासेन तत्प्रसादोऽव्यक्तप्रसादः। सर्वस्यापीति द्वितीयस्तुशब्दोऽपिशब्दार्थे। आधिक्यशब्देन

न्यूनत्वमप्युपलक्ष्यते । न्यूनाधिकयोरन्यत्र प्रत्यवायहेतुत्वात् । नाव्यक्तादेरिति पाठे मध्येत्युपस्कारः । ममोपासनेनाऽऽत्मभावं कैवल्यम् । परमात्मने तमुद्दिश्य । अस्य वाक्यस्य कथं प्रकृतोपयोग इत्यत उक्तम् ॥ श्रीवचनमिति ॥ नित्ये नियते । ब्रह्मण्ये ब्रह्मणि साधौ । निवसामि प्रसन्ना भवामि । इति च श्रीवचनं इति सम्बन्धः । पूर्वं शङ्काहेतुत्वेन श्रियं वसाना इत्यादीनि वाक्यान्युदाहृतानि । तेष्विदमेकं नाव्यक्तविषयमिति वस्तुस्थितिमाह ॥ महत इति ॥ "अनाद्यनन्तं महतः परं" इति वाक्यप्रतिपाद्यमिति यावत् । अत्राभ्युच्चययुक्तिं चाह ॥ तमिति ॥ ननु "उक्तपरामर्शोपपत्तेः" इति पूर्वपक्षेऽपि युक्तिरुक्तेत्यतः साऽन्यथासिद्धेत्याह ॥ महत इति ॥ तथा चोक्तवक्ष्यमाणबलात् "अव्यक्तात् पुरुषः परः" इत्युक्तस्यायं परामर्श इति भावः । श्रुत्यन्तरेणैवं व्याख्यानाच्चैतद्वाक्यं तत्पर[1]मित्याह ॥ तथा चेति ॥ पुरुभिः हूतः पुरुहूतः ।

भा०—

न चाव्यक्तरूपं भगवता निषिद्धम् । भारतादौ साधितत्वात् । "शरीररूपकविन्यस्तगृहीतेः" इत्यादौ तु साङ्ख्यप्रसिद्धं निषिध्य वैदिकमव्यक्तमेवोक्तम् । तथा च सौकरायणश्रुतिः—

"शरीररूपिकाऽशरीरस्य विष्णोः
यतः श्रिया सा जगतः प्रसूतिः" ।

इति । सुव्रतानां क्षिप्रं महदैश्वर्यं ददाति देवी ; न देव इति विशेषः ।

"सुवर्णवर्णां पद्मकरां च देवीं
सर्वेश्वरीं व्याप्तजडां च बुद्ध्वा ।
सैवेति वै सुव्रतानां तु मासा-
न्महाविभूतिं[2] श्रीस्तु दद्यान्न देवः" ॥

इति ऋग्वेदखिलेषु ॥ ५ ॥

---

1. क. ब्रह्मपरम् 2. अ. महाभूतिं

प्र० दी०—

नन्वव्यक्तं नाम तत्वमेव नास्तीति सूत्रकृतोक्तम्। ततस्तदभिमानिन्यव्यक्ताख्या देवताऽपि नास्ति। तत्कथं तद्विषयतया व्याख्यानमित्यत आह॥ न चेति॥ तर्हि तत्कथं सूत्रितमित्यत आह॥ शरीरेति॥ साङ्ख्यप्रसिद्धं प्रधानमिति स्वतन्त्रं मुख्यतः शब्दवाच्यमित्यर्थः। वैदिकमिति भगवदधीनं तत्सम्बन्धेन शब्दवाच्यमित्यर्थः। अत्र श्रुतिं चाह॥ तथा चेति॥ प्राक् "तथाप्यपरोक्षीकृताव्यक्तानां" इत्यादिनैकं प्रयोजनमुक्तम्। अपरं च सप्रमाणकमाह॥ सुव्रतानामिति॥ बुद्ध्वेत्युक्तप्रकारेणोपासीनायेति शेषः। एतत्प्रयोजनं गीतायां न सूचितमिति न तत्रैवोक्तम्॥ ५॥

भ० गी०—

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते॥ ६॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम्॥ ७॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः॥ ८॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्।
अभ्यासयोगेन ततो मामिच्छाऽऽप्तुं धनञ्जय॥९॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि॥१०॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

भा०—

मदुपासकानां भक्तानां न कश्चित् क्लेश इति दर्शयति ॥ ये त्वित्यादिना ॥ उक्तं च सौकरायणश्रुतौ—

"उपासते ये पुरुषं वासुदेव-
मव्यक्तादेरीप्सितं किं नु तेषां"

इति ।

"तेषामेकान्तिनः श्रेष्ठाः ते चैवानन्यदेवताः ।
अहमेव गतिस्तेषां निराशीः कर्मकारिणाम्" ॥

इति च मोक्षधर्मे ॥ ६-११ ॥

प्र० दी०—

नन्वव्यक्तोपासकानां क्लेशातिशयो गीतायां प्रतीयते । भगवदुपासकानां तु तदभावो न प्रतीयते । अतः "तदेतत् सर्वं" इति कथमुक्तमित्यत आह ॥ मदुपासकानामिति ॥ भक्तानामित्यनेन नान्यत्रात्यन्तमादरमिति सूचयति । अत्र "अनन्येनैव योगेन" इत्यादिना विनाऽव्यक्तोपासनमित्येतत् प्रतीयते । उपासत इत्येवोक्त्याऽतिशयोपासनाद्यभावः । 'नचिरात्' इत्यनेन तत्रापीत्यादिकम् । 'तेषामहं समुद्धर्ता भवामि' इत्यनेन देवस्त्वित्यादिकम्[1] । आगामिगीतावाक्यमपेक्ष्य प्राक् बुद्ध्यारोहाय तदुक्तमिति । अत्र श्रुत्यादिसंमतिं चाह ॥ उक्तं चेति ॥ तेषामार्तादीनाम् । मध्ये गतिः साधनादिसम्पादकः ॥ ६-११ ॥

1. ख. देवस्तुत्यादिकं

भ० गी०—

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते।
ध्यानात्कर्मफलत्यागः त्यागाच्छान्तिरनन्तरम् ॥१२

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥ १३ ॥

सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥१४॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यस्स च मे प्रियः ॥ १५ ॥

भा०—

अज्ञानपूर्वादभ्यासाज्ज्ञान[1]मेव विशिष्यते। ज्ञानमात्रात्सज्ज्ञानं ध्यानम्। तथा च सामवेदे अनभिम्लानशाखायाम्[2]—

"अधिकं केवलाभ्यासाज्ज्ञानं तत्सहितं ततः।
ध्यानं ततश्चापरोक्षं ततः शान्तिर्भविष्यति" ॥

इति। ध्यानात् कर्मफलत्याग इति तु स्तुतिः। अन्यथा कथमसमर्थोऽसीत्युच्यते[3]।

"तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते"

इति चोक्तम्।

"सर्वाधिकं ध्यानमुदाहरन्ति
ध्यानाधिके ज्ञानभक्ती परात्मन्।

---

1. अ. ज्ञानमात्रं 2. अ. अनभिम्लातशाखायां 3. अ. उच्येत

कर्माफलाकाङ्क्षमथो विरागः
त्यागश्च न ज्ञानकलाफलार्हाश्च[1] ” ॥

इति कापायणशाखायाम्। वाक्यसाम्येऽप्यसमर्थविषयत्वोक्तेस्तात्पर्याभावः इतरत्र प्रतीयते। ध्यानादिप्राप्तिकारणत्वाच्च त्यागस्तुतिर्युक्ता। केवलध्यानात् फलत्यागयुक्तं ध्यानमधिकम्। ध्यानयुक्तत्याग एव चात्रोक्तः। अन्यथा कथं त्यागाच्छान्तिरनन्तरमित्युच्यते। कथं च ध्यानादाधिक्यम्। तथा च गौपवनशाखायाम्—

“ध्यानात्तु केवलात्त्यागयुक्तं तदधिकं भवेत्”

इति। न हि त्यागमात्रानन्तरमेव मुक्तिर्भवति। भवति च ध्यानयुक्तात्। केवलत्यागस्तुतिरेवमपि भवति। यथाऽनेन युक्तो जेता नान्यथेत्युक्ते ॥ १२-१५ ॥

प्र० दी०—

नन्जु ज्ञानमभ्यासस्य साधनम्। तत्कथं ततः श्रेय इत्यत आह ॥ अज्ञानेनेति ॥ एवेति केवलम्। “ज्ञानाद्ध्यानं विशिष्यते” इत्यसत्। साधनस्यापि ज्ञानस्य सम्भवात्। अज्ञानपूर्वस्य ध्यानस्य सम्भवाच्चेत्यत आह ॥ ज्ञानमात्रादिति ॥ उपपत्तिलब्धमर्थं श्रुत्याऽपि द्रढयति ॥ तथा चेति ॥ तत्सहितं ज्ञानसहितं ध्यानम्। ततो ज्ञानमात्राद्धिकम्। ध्यानात्कर्मफलत्यागो विशिष्यत इत्येतदन्यथाप्रतीतिनिरासाय व्याख्याति ॥ ध्यानादिति ॥ त्यागस्य प्रशस्तत्वमेवानेन लक्ष्यते। न प्रतीतार्थे तात्पर्यमित्यर्थः। कुत इत्यत आह ॥ अन्यथेति ॥ “अथैतदप्यशक्तोऽसि कर्तुं” इति। ध्यानात्प्रत्यवरे कर्मत्यागेऽप्यशक्तस्य कर्मफलत्यागः कथमन्यथा ध्यानादाधिक्ये सत्युपदिश्येतेत्यर्थः। कर्मसंन्यासात्कर्मफलरागसंन्यासात्कर्मयोगोऽपि विशिष्यते। किमुत ध्यानयोगः। वक्ष्यमाणकर्मादिसर्वाधिकम्। परात्मन् परमात्मनि विषये। विरागः शोभनाध्यासाभावः। नन्जु

1. अ. ध्यानकलाफलार्हः

"तयोस्तु" इति "सर्वाधिकं" इति चेत्तयोरपि वाक्यत्वात्कथं तद्विरोधेन "ध्यानात्" इति वाक्यस्य स्वार्थे तात्पर्याभावः व्याख्यात इत्यत आह ॥ वाक्येति ॥ वाक्यत्वेन साम्येऽप्युपपत्तिसाहित्येन प्राबल्यादित्यर्थः । इतरत्र "ध्यानात्" इति वाक्यस्य प्रतीतेऽर्थे । युक्त्यन्तरं चाह ॥ ध्यानादीति ॥ त्यागो हि ध्यानज्ञाननिवृत्त-कर्मानुष्ठानप्राप्तौ कारणत्वेन "परीक्ष्य लोकान्" इत्यादावुच्यते । न च फलात्साधनं श्रेयः । अतोऽपीयं स्तुतिरेवेत्यर्थः । अनेन लक्ष्यार्थोऽपि निष्कृष्योक्तो भवति । प्रकारान्तरेण व्याख्याति ॥ केवलेति ॥ त्यागरहितात् ध्यानात् । ननु कुतो "ध्यानात्" इति केवलस्य निर्धारणम् । कुतश्च कर्मफलत्याग इति तत्सहितध्यानलक्षणा । त्यागस्य वा ध्यानसाहित्येनोपस्कार इत्यतः प्रतिज्ञापूर्वकमाह ॥ ध्यानेति ॥ त्यागयुक्तं ध्यानं ध्यानयुक्तस्त्याग इति द्विविधोक्तयोक्तं प्रकारद्वयं सूचयति ॥ अन्यथेति ॥ केवलत्यागाङ्गीकारे । कथं चेत्यत्रापि 'अन्यथा' इति वर्तते । न केवलमन्यथाऽनुपपत्त्याऽयमर्थः सिद्धः । किं तर्हि ? श्रुत्याऽपीत्याह ॥ तथा चेति ॥ आद्यामन्यथाऽनु-पपत्तिमुपपादयति ॥ न हीति ॥ "ततश्चाऽपरोक्ष्यं" इत्युक्तश्रुति-विरोधादिति भावः । उक्ताङ्गीकारे कथमेतदनुपपत्त्यभाव इत्यत आह ॥ भवति चेति ॥ त्यागादिति सम्बन्धः । ज्ञानमात्रव्यवधानेनेति भावः । द्वितीयानुपपत्तिस्तु "तयोस्तु" इत्युपपादितैव । ननु "अथैतदप्य-शक्तोऽसि" इत्यनेन केवलत्यागो विहितः । तत्प्ररोचनाय "श्रेयो हि" इति तस्य स्तुतिरुपक्रान्ता । न च केवलध्यानात्तत्फलत्यागयुक्तं ध्यानमधिकमिति व्याख्याने केवलत्यागस्तुतिर्लभ्यते । किं तु तद्युक्तस्य ध्यानस्यैव । अतः पूर्वसङ्गतत्वात्पूर्वमेव व्याख्यानं युक्तम् । न तु द्वितीयमसङ्गतेरित्यत आह ॥ केवलेति ॥ यथाऽनेन भृत्येन युक्तो राजा रिपूणां जेता, नान्यथेत्युक्ते भृत्यस्य स्तुतिर्लभ्यते । तथैवमप्य-स्मिन्नपि व्याख्याने केवलत्यागस्तुतिर्युक्ता । ध्यानस्य ध्यानान्त-राधिक्ये तत्साहाय्यस्य हेतुत्वेनोक्तत्वादित्यर्थः ॥ १२-१५ ॥

भ० गी०—

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः।
सर्वारम्भपरित्यागी यो मद्भक्तस्स मे प्रियः ॥ १६ ॥

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति।
शुभाशुभपरित्यागी भक्तिमान्यस्स मे प्रियः
॥ १७ ॥

समः शत्रौ च मित्रे च तथा मानापमानयोः।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥

तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित्।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः
॥ १९ ॥

भा०—

"सर्वारम्भपरित्यागी" इत्यादेः सामान्यविशेषव्याख्यान-व्याख्येयभावेनापुनरुक्तिः। हर्षादिभिर्मुक्त इत्युक्ते कादाचित्कमपि भवतीति "यो न हृष्यति" इत्युक्तम्। उपचारपरिहारार्थं भक्त्य-भ्यासः। "ये तु सर्वाणि कर्माणि" इत्यादेः प्रपञ्च एषः ॥१६-१९॥

प्र० दी०—

पुनरुक्तिदोषमाशङ्क्य परिहरति ॥ सर्वेति ॥ "सर्वारम्भ-परित्यागी", "शुभाशुभपरित्यागी" इत्यादौ सामान्यविशेषभावेन। "सन्तुष्टः सततं" "सन्तुष्टो येन केनचित्" इत्यादौ व्याख्यान-व्याख्येयभावेन। "हर्षामर्षभयोद्वेगैर्मुक्तो", "यो न हृष्यति" इत्यत्र नोक्तं प्रकारद्वयं सम्भवतीत्यत आह ॥ हर्षादिभिरिति ॥ निष्ठाप्रत्ययेनातीतत्वप्रतीत्या कालान्तरे हर्षादिकं भवतीत्याशङ्क्य

क्रियानिबन्धे विहितेन लटा प्रतिपादयतीत्यर्थः। तर्हीदमेवास्तु, किं तेनेत्यत आह॥ उपचारेति॥ सिद्धेऽर्थे वचनमुपचारं तात्पर्यद्योतनेन परिहरतीत्यर्थः। "यो मद्भक्तः" इति भक्तिः पुनः पुनरुच्यते। तत्प्रयोजनमाह॥ आधिक्येति॥ अद्वेष्टा इत्यादिनोक्तेषु सर्वधर्मेषु भक्तेरिति शेषः। "अद्वेष्टा" इत्यादेः सङ्गत्यदर्शनात्तामाह॥ ये त्विति॥ प्रपञ्चः तदुपलक्षितस्याभिधानम्।

अक्षरोपासकानधिकृत्यैतदुच्यत इत्यसत्। सन्निहितसम्बन्धे सति व्यवहितसम्बन्धग्रहणायोगात् "यो मद्भक्तः स मे प्रियः" इत्यादिवचनाच्च॥ १६-१९॥

भ० गी०—

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः॥२०

॥ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः॥ १२॥

भा०—

पिण्डीकृत्योपसंहरति॥ ये तु धर्म्यामृतमिति॥ धर्मो विष्णुः तद्विषयं धर्म्यम्। धर्म्यं मृत्यादिसंसारनाशकं चेति धर्म्यामृतम्। श्रत् आस्तिक्यम्। "श्रन्नामाऽस्तिक्यमुच्यते" इत्यभिधानम्। तद्धधाना श्रद्दधानाः॥ २०॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीता-भाष्ये द्वादशोऽध्यायः॥ १२॥

प्र० दी०—

"ये तु" इत्युक्तमेव किमर्थमुच्यत इत्यत आह॥ पिण्डीकृत्येति॥ धर्म्यामृतमित्येतदप्रतीतार्थं व्याख्यातुं धर्मशब्दं तावद्व्याख्याति॥

धर्म इति ।। तद्विषयं तदुपासनाङ्गत्वात् । धर्मादनपेतं धर्म्यं, धर्मश्च विष्णुः । नादृष्टम् । प्रवृत्तस्यासम्भवात् । निवृत्तस्यैतत्साधनत्वात् । इदानीममृतशब्दं व्याकुर्वन् धर्म्यामृतमिति कर्मधारयोऽयमित्याह ॥ धर्म्यमिति ।। न मृतं अमृतम् । नञ् विरुद्धार्थे । अमृतशब्दश्चोपलक्षक इत्यर्थः । श्रद्दधाना इत्येतद्व्युत्पादयति ॥ श्रदिति ।। "श्रच्छब्दस्योपसङ्ख्यानं" इत्युपसर्गत्वेनोपसङ्ख्यायमानस्याप्यस्य सत्त्वावाचित्वमविरुद्धम् ; उपसर्गत्वस्य कार्यविशेषत्वात् ॥ २० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां द्वादशोऽध्यायः समाप्तः ॥ १२ ॥

---

## ॥ अथ त्रयोदशोऽध्यायः ॥

भ० गी०—

अर्जुन उवाच—

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ १ ॥

श्रीभगवानुवाच—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥ २ ॥

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ ३ ॥

भा०—

॥हरिः ॐ॥ पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान् पिण्डीकृत्य विविच्य दर्शयत्यनेनाध्यायेन ॥ १ ॥ २ ॥ ३ ॥

प्र० दी०—

पूर्वसङ्गतत्वेनाध्यायप्रतिपाद्यं दर्शयति ॥ पूर्वोक्तेति ॥ पूर्वमाषष्ठसमाप्तेः यज्ज्ञानं ज्ञानसाधनमुक्तम् यच्च सप्तमादिभिः षड्भिर्ज्ञेयं ब्रह्मस्वरूपमुक्तम् यदपि "भूमिः आपः" इत्यादिना क्षेत्रमुक्तम्, यच्च "न त्वेवाहं" इत्यादिना पुरुषभेद उक्तः, तत्सर्वमनेनाध्यायेन दर्शयति भगवान् । किमर्थम्? पिण्डीकृत्य विक्षिप्तमेकीकृत्य । गौणोऽत्र क्त्वाप्रत्ययः । पिण्डीकरणार्थमित्यर्थः । पिण्डीकरणे मिश्रत्वादप्रतिपत्तिरेवेत्यत उक्तम् ॥ विविच्येति ॥ प्रकरणशुद्ध्येत्यर्थः ॥ १ ॥ २ ॥ ३ ॥

भ० गी०—

तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत्।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ४ ॥

भा०—

यद्विकारि येन विकारेण युक्तम् । यतश्च यद्यतो याति प्रवर्तते । स च प्रवर्तकः । यतश्च यदित्यस्मात्प्रवर्तते क्षेत्रमिति वचनम् । स च य इति स्वरूपमात्रम् ॥ ४ ॥

प्र० दी०—

यो विकारी यस्य तत् यद्विकारि इति कश्चित् । तदसत् । बहुव्रीहितायामिनेर्वैयर्थ्यात् । किं तु यश्चासौ विकारश्चेति यद्विकारः । सोऽस्यास्तीति यद्विकारीति भावेनाह ॥ यदिति ॥ अत्र येन विकारेणेत्यनेन कर्मधारयं सूचयति । युक्तमिति इनेरर्थम् । यतश्च यत् इत्येतत् यस्माच्च यत्कार्यमुत्पद्यते इति कश्चित् व्याख्यातवान् । तदयुक्तम् । यद्विकारीत्यनेन गतार्थत्वात् । साध्याहारत्वाच्च । विकारांश्च गुणांश्च इत्यस्यान्यथोपपत्तेः । अपरस्तु यतश्च अमानित्वादिभ्यो यज्ज्ञेयं प्राप्यत इति । तदप्यसत् । अध्याहारादेव । अमानित्वमित्यादेरनादिमदित्यादेश्चान्यथासिद्धेरित्यन्यथा व्याचष्टे॥ यतश्चेति ॥ यतो यस्य प्रेरणया । यदिति इणः लडादेशशत्रन्तस्य रूपम् । इणो यातेश्चानतिभिन्नार्थत्वात् 'याति' इत्युक्तम् । सर्वस्य क्षेत्रस्य गत्यभावात् गौणीं वृत्तिमश्रित्य विवृणोति ॥ प्रवर्तत इति ॥ "स च य" इति जीवप्रतिज्ञेति व्याख्यानमसत् । तस्याप्रकृतत्वात् । क्षेत्रज्ञशब्दस्यातद्विषयत्वादिति भावेनाह ॥ स चेति ॥ "यतः क्षेत्रं प्रवर्तते" इति प्रवर्तकस्य प्रकृतत्वादित्याशयः । नन्वेवं चेदेतद्वक्तव्यम् । किं "यतश्च यत् स च य" इत्येकैव प्रतिज्ञा । उत द्वे । नाद्यः । चशब्दद्वयानुपपत्तेः । तत्समासेनेत्यनेनान्वयात् । "स च य" इत्यस्य वैयर्थ्याच्च । न द्वितीयः । अर्थभेदाभावादित्यतो

द्वितीयमङ्गीकृत्याह ॥ यतश्चेति ॥ "यतश्च यत्" इति वचनमस्मादेवंधर्मविशिष्टात् क्षेत्रं प्रवर्तत इति वक्तुं प्रतिज्ञारूपम् । "स च य" इति वचनं प्रवर्तकस्य स्वरूपमात्रं वक्तुं प्रतिज्ञारूपं इत्यर्थभेद इत्यर्थः ॥ ४ ॥

भ० गी०—

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ५ ॥
महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ६ ॥

भा०—

ब्रह्मसूत्राणि शारीरकम् ॥ ५ ॥ ६ ॥

प्र० दी०—

ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि । ततश्च छन्दसां ऋषिवाक्यानां च तथात्वात् "ऋषिभिः" इत्यादिकं वृथा स्यादित्यतो रूढिमाश्रित्याह ॥ ब्रह्मेति ॥ ॥ ५ ॥ ६ ॥

भ० गी०—

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ७ ॥

भा०—

इच्छादयो विकाराः ॥ ७ ॥

प्र० दी०—

"महाभूतानि" इत्यनुक्रम्य "एतत् क्षेत्रं समासेन सविकारमुदाहृतं" इत्युक्तम् । तत्र न ज्ञायते किं क्षेत्रं के च तद्विकारा इत्यत आह ॥ इच्छादय इति ॥ पूर्वं क्षेत्रमिति भावः ॥ ७ ॥

भ० गी०—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ८ ॥

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ९ ॥

भा०—

"स च यो यत्प्रभावश्च" इति वक्तुं तज्ज्ञानसाधनान्याह ॥ अमानित्वमित्यादिना ॥ आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं डम्भः ।

"ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं डम्भो माहात्म्यदर्शनं"
इति ह्यभिधानम् । आर्जवं मनोवाक्कायकर्मणामवैपरीत्यम् ॥ ८ ॥ ९ ॥

प्र० दी०—

ननु षट्स्वर्थेषु प्रतिज्ञातेष्वमानित्वादिकमनन्तर्भूतं किमित्युच्यत इत्यत आह ॥ स चेति ॥ इति प्रतिज्ञातमर्थद्वयं वक्तुं ज्ञेयं यत्तदित्यादिना । न यादृशतादृशेन श्रवणेन तदनुभवारूढं भवतीत्याशयेनेति शेषः । मानाहङ्काराभ्यां दम्भं पृथग्दर्शयति ॥ आत्मेति ॥ आर्जवं ज्ञानसाधनं यथा स्यात्तथा व्याचष्टे ॥ आर्जवमिति ॥ एतच्च सन्मार्ग इति ज्ञातव्यम् ॥ ८ ॥ ९ ॥

भ० गी०—

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ १० ॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ ११ ॥

भा०—

सक्तिः स्नेहः। स एवातिपक्वोऽभिष्वङ्गः। "स्नेहस्सक्तिस्स एवातिपक्वोऽभिष्वङ्ग उच्यते" इत्यभिधानम्॥ १०॥ ११॥

प्र० दी०—

सक्त्यभिष्वङ्गशब्दयोः अर्थभेदमाह॥ सक्तिरिति॥ १०॥ ११॥

भ० गी०—

अध्यात्मज्ञाननित्यत्वं तत्वज्ञानार्थदर्शनम्।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतो[1]ऽन्यथा॥१२॥

भा०—

तत्वज्ञानार्थदर्शनं अपरोक्षज्ञानार्थं शास्त्रदर्शनम्॥ १२॥

प्र० दी०—

ननु तत्वज्ञानार्थदर्शनं नाम ज्ञानमेव। तत्कथं ज्ञानसाधनेषूच्यत इत्यत आह॥ तत्वेति॥ शास्त्रदर्शनं तात्पर्यालोचनम्। अत्र शास्त्रस्येत्यध्याहृत्य व्याख्यानमिति ज्ञातव्यम्॥ १२॥

भ० गी०—

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते॥ १३॥

भा०—

"परं ब्रह्म" इति "स च य" इति प्रतिज्ञातमुच्यते। अन्यत् "यत्प्रभाव" इति। आदिमद्देहवर्जित[2]मनादिमत्। अन्यथा 'अनादि' इत्येव स्यात्॥ १३॥

प्र० दी०—

प्रतिज्ञातार्थद्वयप्रतिपादनाय "ज्ञेयं यत्तत्" इत्यादिकं वाक्यमिति

1. अ. तदतः 2. अ. आदिमद्देहादिवर्जितम्

सूचितम्। तत्र[1] केन तु[2] किमुच्यत इत्यत आह॥ परमिति॥ इति नामोक्त्या। अन्यदनादिमदित्यादिकं "यत्प्रभाव" इति प्रतिज्ञातस्य प्रतिपादकमित्यर्थः। आदिरस्यास्तीत्यादिमत्। न आदिमत् अनादिमदिति व्याख्याने, न विद्यते आदिः यस्येत्यनादिरिति बहुव्रीहित्वाश्रयणेनैव विवक्षितार्थसिद्धेः मतुपो वैयर्थ्यमिति दोषं पश्यन्तः केचित् "अनादिः" इति "मत्परं" इति च पदं विच्छिद्य अहं वासुदेवाख्या परा शक्तिः यस्य तत् मत्परमिति व्याचक्षते। तदसत्। अर्थासम्भवात्। न हि "ब्रह्म" इति वासुदेव इति कश्चिद्भेदः। "न चावतारेषु पारावर्यं" इत्युक्तमिति भावेन यथा मतुपो न वैयर्थ्यं तथा व्याचष्टे॥ आदिमदिति॥ आदिः एषामस्तीत्यादिमन्ति। न विद्यन्ते आदिमन्ति यस्य तदनादिमत्। सामर्थ्याच्चानि देहेन्द्रियगुणक्रियादीनीत्यर्थः। अथवा पूर्वोक्त एव विग्रहः। न च मतुपो वैयर्थ्यम्। वैदिकं लिङ्गव्यत्ययं विभक्तिलोपं वा मन्यमानस्य बहुव्रीहिर्वा नञ्समासो वाऽयमिति संशयः स्यात्। तथाच ब्रह्म स्वयं कारणं न भवतीत्यपि शङ्क्येत। तन्निवृत्त्यर्थं मतुबन्तेनाऽदिशब्देन नञ्समासस्याऽश्रयणात्। ये त्वेवं प्रयोजनमनभिधाय मतुपः प्रयोगः श्लोकपूरणार्थमित्युक्तवन्तस्तान्निराचष्टे॥ अन्यथेति॥ अस्मदुक्तप्रयोजनद्वयानङ्गीकार इत्यर्थः। सार्थकेन शब्दान्तरेण श्लोकपूरणसम्भवादिति भावः। ननु बहुव्रीहिमाश्रित्य पुनः मतुपः प्रयोगे दोषः स्यात्। न चैवम्। किं तु शब्दान्तरमेवैतत्। तत्कथमयं दोषः। अन्यथा "यद्विकारि" इत्यत्रापि दोषप्रसङ्गात्। मैवम्। बहुव्रीहिं विवक्षित्वाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसम्भवे बहुयत्नाश्रयणस्य दोषत्वेनोक्तत्वात् "यद्विकारि" इत्यत्र गौरवाभावात्॥ १३॥

भ० गी०—

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥ १४॥

---

1. क. अत्र 2. क. तु इति न दृश्यते

*

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १५ ॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥१६॥

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१७॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ॥ १८ ॥

भा०—

सर्वेन्द्रियाणि गुणांश्चाभासयतीति सर्वेन्द्रियगुणाभासम् । इन्द्रियवर्जितत्वाद्यर्थ उक्तः पुरस्तात् ॥ १४-१८ ॥

प्र० दी०—

अहं परा शक्तिः यस्य इति व्याख्याने अर्थासम्भवं कश्चिदन्यथा प्राह । "ब्रह्मणस्सर्वविशेषप्रतिषेधेनैवात्र जिज्ञापयिषितत्वाच्छक्तिमत्त्वप्रतिपादनं विरुद्धं" इति । तदसत् । अत्र विशेषवत्त्वस्य[1] दर्शनादिति भावेनाऽह ॥ सर्वेति ॥ गुणान् तद्विषयानाभासयति प्रत्यापयति प्रत्येतीति वा । भासतेः पचाद्यच् । "एवं सर्वतः पाणिपादं तत्" "सर्वभृत्" "गुणभोक्तृ च" इत्यादिकमप्युदाहार्यम् । कथं तर्हि "सर्वेन्द्रियविवर्जितं", "निर्गुणं", "अचरं" इत्याद्युक्तमित्यत आह ॥ इन्द्रियेति ॥ आदिशब्दात्परं 'शब्द' इत्यध्याहार्यम् । पुरस्तात् द्वितीये ॥ १४-१८ ॥

---

1. क. सविशेषत्वस्य

भ० गी०—

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते॥ १९ ॥

भा०—

विकारान्तर्भावात् ज्ञानसाधनं प्रथमत उक्तम्। बहुत्वात् साधनात्युपयोगात् प्रभावः ॥ १९ ॥

प्र० दी०—

ननु ब्रह्मणि प्रतिपादिते केन साधनेनेदं बुद्ध्यारूढं भवेदित्याकाङ्क्षायां साधनं पश्चाद्वक्तव्यम्। तत्कुतः प्रथमत उक्तमित्यत आह ॥ विकारेति ॥ विकारिष्वन्तर्भावं ज्ञापयितुं तदनन्तरमुपोद्घातप्रक्रिययोक्तमिति भावः। उद्देशक्रमानुसारेण "यतश्च यत्" इति प्रथममनुक्त्वा "स च यो यत्प्रभावश्च" इत्येतत्कुत उक्तमित्यत आह ॥ बहुत्वादिति ॥ सूचीकटाहनिर्माणादौ बहुत्वस्य प्राथम्यव्यभिचारात् हेत्वन्तरोक्तिः। अलौकिकस्य प्रभावस्य बुद्ध्यारोहे हि साधनानामत्युपयोगो न तु तावान् लौकिकस्य प्रेरकत्वस्यानुभवारोह इति ज्ञानसाधनानन्तरमेव प्रभाव उक्तः। तत्प्रसङ्गेन चेति भावः ॥ १९ ॥

भ० गी०—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥२०॥

भा०—

"यतश्च यत्" इति वक्तुं प्रकृतिविकारपुरुषान् सङ्क्षिप्याह ॥ प्रकृतिमिति ॥ गुणाः सत्त्वादयः। तेषामत्यल्पो विशेषो लयात्सर्ग इति विकाराः पृथगुक्ताः।

"कार्याकार्यगुणास्त्रिस्रः यतस्स्वल्पोद्भवो जनौ"
इति[1] माधुच्छन्दसशाखायाम् ॥ २० ॥

प्र० दी०—

ननु "प्रकृतिं पुरुषं चैव विद्धि" इत्यादिकमप्रतिज्ञातं किमित्युच्यते। मैवम्। "यादृक्‌ च" इति प्रतिज्ञातस्य सप्रकारस्य क्षेत्रस्य कथनात्। तत्प्रतिज्ञाक्रमेण प्रागेव कुतो नोक्तमित्यत आह ॥ यतश्चेति ॥ "यतश्च यत्" इति प्रतिज्ञातं प्रेरकस्वरूपं तावत्प्रभावानन्तरं वक्तव्यं प्राप्तम्। तत्र प्रेरकस्य स्वरूपनिरूपणं प्रेर्यज्ञानमपेक्षते। प्रेर्यं च सप्रकारं क्षेत्रम्। प्रेरकस्वरूपं[2] वक्तुमनेन प्रेरणीयं सप्रकारं क्षेत्रमुच्यते। तस्य प्रागपि वचने गौरवं स्यादिति भावः। तर्हि "प्रकृति" इत्यादि कथमुच्यते। ईश्वरातिरिक्तस्सर्वोऽपि चेतनाचेतनवर्गः क्षेत्रमित्युच्यते। तत्र प्रकृतिशब्देन "महाभूतानि" इत्यादिनोक्तानि चतुर्विंशतितत्त्वानि गृह्यन्ते। विकारशब्देनेच्छाद्युपलक्षिताः क्षेत्रान्तर्भूता अपि गुणत्रयाद्यास्सर्वे विकारा विवक्षाविशेषवशेन पृथगुपात्ताः। पुरुषशब्देन जीव इति। "यावत् सञ्जायते" इत्यादिना पुनर्वक्ष्यमाणत्वात्पुनरुक्तिदोषं परिहर्तुं "सङ्क्षिप्य" इत्युक्तम्। 'आह' सप्रकारान् निरूपयति। गुणाः सुखदुःखमोहा इति कश्चित्। कार्यकारणलक्षणा इत्यन्यः। तदुभयं निराकर्तुं व्याचष्टे॥ गुणा इति॥ ननु सत्त्वरजस्तमसामपि प्रकृतिविकारत्वात् विकारांश्च गुणांश्चेति पृथगुक्तिः किमर्थेत्यत आह ॥ तेषामिति ॥ इति ज्ञापयितुमिति शेषः। विकाराः पृथगुक्ता इति। विकाराश्च गुणाश्च पृथगुक्ता इत्यर्थः। कार्याश्च ते अकार्याश्च। तिस्रः त्रयः। अनेन सुखाद्यङ्गीकारे विकारेभ्यः पृथग्ग्रहणमयुक्तमित्यपि सूचितम् ॥ २० ॥

भ० गी०—

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २१ ॥

---

1. अ. इति हि  2. क. अतः प्रेरकस्वरूपं

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २२ ॥

भा०—

कार्यं शरीरम् । "शरीरं कार्यमुच्यते" इत्यभिधानात् । कारणानि इन्द्रियाणि । भोगोऽनुभवः । स हि चिद्रूपत्वादनुभवति । प्रकृतिश्च जडत्वात् परिणामिनी ।

"कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्" ॥

इति भागवते ॥ २१-२२ ॥

प्र० दी०—

कारणानामपि कार्यत्वात् पृथगुक्तिः व्यर्थेत्यतो रूढिमाश्रित्य कार्यकारणशब्दौ व्याख्याति ॥ कार्यमिति ॥ 'भोक्तृत्व' इत्यत्र प्रकृत्यर्थो भोगः अभ्यवहारादिः सुखादिविषयो न सम्भवति । अत आह ॥ भोग इति ॥ स्वीयतया साक्षात्कार इत्यर्थः । भोगः प्रकृतेरेव । न पुरुषस्य । अतः "पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुः" इति कथमुक्तमिति साङ्ख्याः । तत्राह ॥ स हीति ॥ न तु प्रकृतिचैतन्यादिति शेषः । ननु "कार्यकारणकर्तृत्वे हेतुः प्रकृतिः" इत्युक्तम् । कर्तृत्वं च ज्ञानेच्छाप्रयत्नयोगः । तत्कथं प्रकृतेर्भोगासम्भव इत्यत आह ॥ प्रकृतिश्चेति ॥ चस्त्वर्थः । परिणामिकारणत्वात् कर्तृत्वमित्युपचर्यत इति भावः । श्लोकार्थे पुराणसम्मति[1]माह ॥ कार्येति ॥ 'कारणं विदुः' इत्युत्तरार्धेऽनुवर्तते ॥ ११ ॥ १२ ॥

भ० गी०—

उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥२३

1. क. ख. सम्मतिं च

भा०—

"यतश्च यत्" इत्याह ॥ उपद्रष्टेति ॥ अनुमन्ता अन्वनु विशेषतो निरूपकः। "पुरुषस्सुखदुःखानां" इति जीव उक्तः। "पुरुषं प्रकृतिं" इति जीवेश्वरौ सहैवोच्येते। अन्यत्र महातात्पर्यविरोधः। उत्कर्षे हि महातात्पर्यम्। तथा हि सौकरायण-श्रुतिः—

"अवाच्योत्कर्षे महत्त्वात् सर्ववाचां
सर्वन्यायानां च महत्तत्परत्वम्।
विष्णोरनन्तस्य परात्परस्य तच्चापि
ह्यस्त्येव न चात्र शङ्का।
अतो विरुद्धं तु यदत्र मानं तदक्षजादावथवाऽपि युक्तिः।
न तत्प्रमाणं कवयो वदन्ति
न चापि युक्तिर्ह्यूनमतिर्हि दृष्टेः।"

इति। अतो युक्तिभिरप्येतदपलापो न युक्तः। अतो यथा युक्त्याऽविद्यमानत्वादि कल्पयति साप्याभासरूपेति सदैव माहात्म्यं वेदैरुच्यत इति सिद्ध्यति। अवान्तरं च तात्पर्यं तत्रास्ति। उक्तं च तत्रैव—

"अवान्तरं तत्परत्वं च सत्त्वे महद्वाप्येकत्वा[1]त्तयोरनन्तः"

इति। श्यामत्वाद्यभिधानाच्च। युक्तं च पुरुषमतिकल्पितयुक्त्यादेराभासत्वम्। अज्ञानसम्भवात्। न तु स्वतः प्रमाणस्य वेदस्याऽभासत्वम्। अदर्शनं च सम्भवत्येव पुंसां बहूनामप्यज्ञानात्। तर्ह्यस्मदनधीतश्रुत्यादौ विपर्ययोऽपि स्यादिति न वाच्यम्। यतस्तत्रैवाऽह—

"नैव तद्विरुद्धा[2] वाचो नैव तद्विरुद्धा[3] युक्तयः
इति ह प्रजापतिरुवाच"।

इति। तद्विरुद्धं च जीवसात्म्यम्[4]।

1. अ. एकत्वात्तु 2. 3. अ. नैतद्विरुद्धा 4. अ. जीवसाम्यं

प्र० दी०—

"यतश्च यत् इति वक्तुं" इत्युक्तम्। तत्केनोच्यत इत्यत आह॥ यतश्चेति॥ इति प्रतिज्ञानमिति शेषः। अनुमन्ताऽनुज्ञाता इति कश्चित्। तदसत्। औदासीन्यप्राप्तौ 'भर्ता' 'भोक्ता' इत्यादि-विरोधादिति भावेन व्याचष्टे॥ अनुमन्तेति॥ अनुशब्दः पुनरर्थे। क्रियाऽऽवृत्तिश्च तदर्थ इति ज्ञापनाय द्विरुक्तिः। 'विशेषत' इति तृनोऽर्थः। निरूपकः कर्तव्यस्याऽलोचकः। "य एनं वेत्ति पुरुषं" इत्यत्र पुरुषशब्दं व्याख्यातुमुपोद्घातमाह॥ पुरुष इति॥ सुखदुःख-भोक्तृ[1]लिङ्गादिति भावः। सुखदुःखानां भोक्तृत्वे भोगे हेतुः कर्तेति व्याख्यानमाश्रित्येदमुक्तम्। व्याख्यानान्तरे तु भगवानेवात्र पुरुषः पुरुषः प्रकृतिस्थो हीति जीवः। उपलक्षणमेतत्। उपद्रष्टेति ईश्वर उक्त इत्यपि द्रष्टव्यम्। ततः किमित्यत आह॥ पुरुषमिति॥ यत एवं उभावपि प्रकृतौ, अतो "य एनं वेत्ति पुरुषं" इत्यत्र पुरुषशब्देन जीवेश्वरौ द्वावपि गृह्येते, द्वयोरपि परामर्शसम्भवात्। तर्हि द्वयोः द्विवचनेन भाव्यमित्यत उक्तम्॥ सहैवेति॥ तन्त्रेणेत्यर्थः। अत्र कश्चित् 'य एनं वेत्ति पुरुषं' 'साक्षादहमस्मि' इत्येवमध्याहारेण जीवेश्वरैक्यं व्याख्यातवान्। तद्दूषयति॥ अन्यत्रेति॥ जीवेश्वरैक्ये सर्ववेदानां प्राधान्येन यत्प्रतिपादकत्वं तद्विरोधः। कथमित्यत आह॥ उत्कर्षे हीति॥ सर्वागमानामीश्वरस्य सर्वोत्कर्षे हि महातात्पर्यमित्यर्थः। तत्कुतः? प्रागुक्तयुक्तेः। श्रुतेश्चेत्याह॥ तथा हीति॥ विष्णोः महत्त्वादेवावाच्यत्वेनोक्ते सर्वोत्कर्षे सर्वासां वेदवाचां, सर्वन्यायानां, न्यायव्युत्पादकस्य मीमांसाशास्त्रस्येति यावत्। महत्तत्परत्वं महा-तात्पर्यम्। अस्तूत्कर्षे महातात्पर्यम्। तथाऽप्युत्कर्षस्य सत्त्वं कुतः? न हि जैनवाक्यस्य क्वचित् महातात्पर्येऽपि तत्सत्त्वमस्तीत्यत आह॥ तच्चापीति॥ न केवलं तत्र तात्पर्यम्। किं तु तन्महत्त्वमपि चास्त्येव। धियां स्वतः प्रामाण्यादिति हेरर्थः। स्वतः प्रामाण्येऽपि बाधकात् विषयासत्त्वं भवति। तदप्यत्र नास्तीत्याह॥ न चात्रेति॥ शङ्केति॥

1. क. ख. सुखदुःखभोक्तृत्वलिङ्गात्

शङ्काहेतुः बाधकमिति यावत् । कथं बाधकाभाव इत्यत आह ॥ अत इति ॥ 'अत' इत्यस्योत्तरत्रान्वयः । तत्र, ईश्वरस्य सर्वोत्कर्षे तु यद्विरुद्धं मानं शङ्क्यते, तदपि किमक्षजादौ अक्षजागमयोरन्यतरत्, अथवा युक्तिः । आद्यं निराकरोति ॥ न तदिति ॥ कवयो न्यायविदः । कुतः ? अतः, उपजीव्यवेदविरोधात् । एतेन द्वितीयोऽपि निरस्तः । तथाऽपि विशेषं वक्तुमाह ॥ न चेति ॥ युक्तिरपि नैव मानं; यतो दृष्टेः श्रुतेः ऊनमतिः जात्यैव दुर्बलज्ञानोत्पादिका । भगवदुत्कर्षे सर्वागमानां महातात्पर्यमित्यत्र पठितायाः श्रुतेः शेषेण योऽर्थो लब्धः सोऽपि प्रकृतोपयुक्त एव । उत्कर्षस्य सत्त्वाभावे जीवेश्वरैक्यस्य तद्विरोधाभावात् । अतस्तं स्ववाक्येनाप्याह ॥ अत इति ॥ 'युक्तिभिः' इत्युपलक्षणम् । एतदपलापः भगवदुत्कर्षस्याविद्यमानत्वादिकल्पनम् । अत इत्युक्तमेवार्थं विशदयति ॥ अत इति ॥ वेदविरोधादित्यर्थः । आदिपदेनानिर्वाच्यत्वं गृह्यते । भगवदुत्कर्षस्येति शेषः । साऽपीत्यपिशब्देन प्रत्यक्षादेस्समुच्चयः । इतिशब्दो हेतौ । बाधकाभावादित्यर्थः । उत्कर्षस्य प्रकृतत्वेऽपि तच्चापीति श्रौततच्छब्दव्याख्यानाय 'माहात्म्यं' इत्युक्तम् । ननु प्रतिपन्नस्य विद्यमानत्वादिकं बाधकाभावेन कल्प्यम् । स्वतः प्रामाण्यात् । न चोत्कर्षस्य सत्त्वं वेदात्प्रतिपन्नम् । उत्कर्षे तत्सत्त्वे च तात्पर्याङ्गीकारे वाक्यभेदप्रसङ्गादित्यत आह ॥ अवान्तरं चेति ॥ चशब्दस्य तत्र सत्त्वे चेत्यन्वयः । उभयत्र महातात्पर्याभावान्न दोषः । एतत्कुत इत्यत आह ॥ उक्तं चेति ॥ तत्रैव तस्यामेव श्रुतौ । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तूत्कर्षसत्त्वे[1] महदपि तत्परत्वम् । कुतः ? अनन्तसम्बन्धिनोस्तयोरुत्कर्षस्य तत्सत्त्वस्य चैकत्वात् । अनन्त इति प्रकृतत्वादेवोक्तम् । एतदुक्तं भवति । प्रमाणं प्रवर्तमानं विधिरूपं निषेधरूपं वा, न तूदासीनम् । तस्य च बाधाभावे स्वत एव सत्त्वासत्त्वलक्षणौ विधिनिषेधौ सिध्यतः ; किं तत्र तात्पर्यान्तरकल्पनयेति । ननु निराकारमेव ब्रह्म श्रूयते । तत्कथं तद्गुणोत्कर्षे सर्वश्रुतीनां महातात्पर्यं स्यादित्यत आह ॥

1. क. 'उत्कर्षसत्त्वे' इत्यतः परं 'सर्वेषां' इत्यधिकः पाठः

श्यामत्वादीति ॥ एतच्चानन्तरातीताध्याये प्रपञ्चितम् । वेदविरोधात् युक्त्यादेराभासत्वमित्युक्तम् । तदयुक्तम् । नियामकाभावात् । विपर्ययस्यापि सुवचनादित्यत आह ॥ युक्तं चेति ॥ युक्तं, सम्भावितम् । अज्ञानसम्भवात्, अज्ञानमूलत्वसम्भवात् । अज्ञानमुपाधिव्यभिचारादिविषयम् । स्वतः प्रमाणस्या[1]पौरुषेयतया पुरुषगुणानपेक्षप्रमाणभावस्य । युक्तेरज्ञानमूलत्वसम्भावना निर्बीजेत्यत आह[2] ॥ अदर्शनं चेति ॥ सम्भवति शङ्कार्हमित्यर्थः । एतदुक्तं भवति । वेदस्य युक्त्यादेश्च, परस्परविरोधे द्वयोः प्रामाण्यानुपपत्तावन्यतरस्याऽऽभासत्वे कल्पनीये, युक्त्यादेरेव तत्कल्प्यं सम्भवात् । न तु वेदस्यासम्भवात् । निरवकाशेन सावकाशस्य बाधदर्शनादिति । पुरुषेष्वदर्शनमाशङ्कमानानामतिप्रसङ्गमाशङ्क्य निषेधति ॥ तर्हीति ॥ विपर्ययो भगवद्गुणोत्कर्षस्य । "सर्ववाचां" इति श्रुत्यैवोक्तत्वादिति परिहारे स्थितेऽन्यमप्याह ॥ यत इति ॥ तस्यामेव श्रुतावाह वेदपुरुषः । एतद्विरुद्धाः भगवद्गुणोत्कर्षविरुद्धाः । "उत्कर्षे हि" इत्यादिनोक्तमुपसंहरति ॥ तदिति ॥ सर्ववेदानां यद्भगवद्गुणोत्कर्षे महातात्पर्यमुक्तं तद्विरुद्धं जीवसात्म्यं, जीवस्यैकात्म्यम् ।

भा०—

"आभास एव च" इति चोक्तम् । "जनमेजय उवाच[3]—

बहवः पुरुषा ब्रह्मन् उताहो एक एव तु ।
को ह्यत्र पुरुषश्रेष्ठः तं भवान् वक्तुमर्हति ॥

श्री वैशम्पायन उवाच[4]—

"नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्भव ।
बहूनां पुरुषानां हि यथैका योनिरुच्यते ।
तथा[5] तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ॥"

---

1. क. स्वतः प्रामाण्यस्य
2. ख. अज्ञानमूलत्वसम्भावना न निर्बीजेत्याह
3. अ. जनमेजय उवाच इति न पठ्यते
4. 5. अ. उवाच इति क्वचित् न पठ्यते। "तथा तं पुरुषं" इति श्लोकार्धोऽपि

इति[1] मोक्षधर्मे। न च तत्सर्वं स्वप्नेन्द्रजालवत्[2]। "वैधर्म्याच्च न स्वप्नादिवत्" इति[3] भगवद्वचनम्। न च स्वप्नवदेकजीवकल्पितत्वे मानं पश्यामः। विपर्यये माश्वोक्ता द्वितीये। उक्तं च अयास्य-शाखायां—

"स्वप्नो ह वाऽयं चञ्चलत्वान्न स्वप्नो
न हि विच्छेदो एतदिति"।

इति। नायं दोषः। न हीश्वरस्य जीवैक्यमुच्यते। जीवस्य हीश्वरैक्यं ध्येयम्। तदपि न निरुपाधिकम्। अतो न प्रतिबिम्बत्वस्य[4] विरोध्यैक्यम्। तथा च माधुच्छन्दसश्रुतिः—

"ऐक्यं चापि प्रतिबिम्बेन[5] विष्णोः
जीवस्यैतदृषयो वदन्ति"।

इति। अहङ्ग्रहोपासने च फलाधिक्यं आग्निवेश्यश्रुतिसिद्धम्—

"अहङ्ग्रहोपासकस्तस्य साम्यं अभ्याशो
ह वा अश्नुते नात्र शङ्का"।

इति।

"तदीयोऽहमिति ज्ञानमहङ्ग्रह इतीरितः"

इति वामने।

"तद्वशत्वात् सोऽस्मीति भृत्यैरेव न तु स्वतः"

इति च। प्रातिबिम्ब्येन सोऽस्मि भृत्यश्च इति भावना। तथा हि अयास्यशाखायाम्—

"भृत्यश्चाहं प्रातिबिम्ब्येन सोऽस्मि इत्येवं
ह्युपास्यः परमः पुमान् सः"

इति। प्रातिबिम्ब्यं च तत्साम्य[6]मेव॥ २३॥

---

1. अ. इति च
2. अ. स्वप्नेन्द्रजालादिवत्
3. अ. इति हि
4. अ. प्रतिबिम्बत्वविरोधि
5. अ. प्रातिबिम्ब्येन
6. अ. तत्सादृश्यमेव

प्र० दी०—

सूत्रेतिहासविरुद्धं चेत्याह ॥ आभास इति ॥ वहव इति पक्षेऽपि किं सर्वे समाः उतैकः श्रेष्ठः । द्वितीये कोऽसावत्र पुरुषेषु श्रेष्ठः ; कथं च श्रेष्ठः तं तथा वक्तुमर्हतीति । एतत् एतस्मिन् जगति । किं तु बहवः । तेषां बहूनां पुरुषाणां मध्ये यो योनिः कारणभूतः सः श्रेष्ठः । तथा च तं पुरुषं तथा व्याख्यास्यामि । विश्वं व्याप्तम् ।

स्यादेतत् । सर्वं जगत् स्वप्नवदेकाज्ञानकल्पितमित्येके । इन्द्र-जालवदनेकाज्ञानकल्पितमित्यपरे । अपकृष्टापेक्षश्चोत्कर्षः । तथा चापकृष्टस्य विश्वस्य मिथ्यात्वादुत्कर्षस्य सत्त्वं कथं स्यात् । कथं च तत्र सर्ववेदानां महातात्पर्यमित्यत आह ॥ न चेति ॥ भगवद्वचनं यत इति शेषः । इतोऽप्येवमित्याह ॥ न चेति ॥ कल्पितत्वे विश्वस्य । एवं बहुजीवकल्पितत्वेऽपीति वाच्यम् । विपर्यये सत्यत्वे । तर्हि कथं विश्वस्य पुराणेषु स्वप्नादिसाम्यमुच्यत इत्यत आह ॥ उक्तं चेति ॥ अयं प्रपञ्चः स्वप्न इवोच्यते । चञ्चलत्वादनित्यत्वात् विकारित्वाच्च । न तु स्वप्नः साक्षान्मिथ्या इति यावत् । कुतः ? एतत् एतस्य विच्छेदो बाधो न हीत्यर्थः । यद्यपि स्वप्नः सत्यः । तथाऽप्यङ्गीकार-वादोऽयम् । मिथ्यार्थप्राचुर्याद्वा ।

ननु जीवस्य ब्रह्मणि "अहं ब्रह्मास्मि" इत्यहङ्ग्रहोपास्तिस्तावत् कर्तव्या । जीवश्च न सर्वोत्कृष्टः । ततश्च तेनैकीभूतस्येश्वरस्य कथं सर्वोत्कर्ष इत्यत आह ॥ नायमिति ॥ बुद्धिस्थस्य 'अयं इति' परामर्शः । कुत इत्यत आह ॥ न हीति ॥ किं तर्ह्युच्यत इत्यत आह ॥ जीवस्य हीति ॥ स्यादयं दोषः, यदि "अहं ब्रह्मास्मि" इत्यादिनेश्वरमुद्दिश्य तस्यानुत्कृष्टजीवैक्यमुच्येत । न चैवम् । किं तु जीवमुद्दिश्य तस्येश्वरैक्यम् । अन्यथा ब्रह्म मदात्मकं भवतीति निर्देश-प्रसङ्गादिति । सत्यमेतज्जीवस्येश्वरैक्यमुच्यत इति । तथाऽपि नोक्तदोषपरिहारः । यदीश्वरः वस्तुतस्सर्वोत्कृष्टः स्यात्तदा कथं जीवस्य तदैक्यं स्यात् । तस्यानुत्कृष्टत्वेनानुभवात् । अतो जीवस्य ब्रह्मणि श्रुतस्याहङ्ग्रहोपासनस्यान्यथानुपपत्त्येश्वरस्य सर्वोत्कृष्टत्वं मिथ्ये-

त्यङ्गीकार्यमित्यत आह ॥ तदिति ॥ यज्जीवस्येश्वरेणैक्यमुच्यते तदपि न निरुपाधिकं निरुपचरितम्। किं तूपचारेणैवमुच्यते। उपचारबीजं सहेतुकमाह ॥ अत इति ॥ यतः साक्षादैक्यं नार्थः। अतः "अहं ब्रह्मास्मि" इत्यादावुच्यमानमैक्यं प्रतिबिम्बत्वविरोधि प्रतिबिम्बत्वादन्यन्न भवति। किं तु प्रतिबिम्बत्वमेवेत्यर्थः। ननु साक्षादैक्यं कुतो नार्थः। कुतश्चोपचारोऽपि प्रतिबिम्बत्वनिमित्त इत्यत आह ॥ तथा चेति ॥ जीवस्यापि विष्णोरैक्यं यदृषयो वदन्ति तत्प्रतिबिम्बेनैव[1] निमित्तेन हीत्यर्थः। इतश्चोपचारेणैवाहंग्रहोपासनमित्याह ॥ अहमिति ॥ फलाधिक्यं, मुख्यं फलम्। अहङ्ग्रहोपासनस्य हि परमं प्रयोजनमीश्वरसारूप्यापत्तिरेव श्रुत्योच्यते। यदि च निरुपचरितमैक्यमुपास्यं स्यात्तदा तन्नोपपद्येत। "तं यथा यथोपासते तदेव भवति" इति श्रुतेरिति भावः। अभ्याशः समीपम्। अल्पेनैव कालेनेत्यर्थः। इतोऽप्युपचारेणैवाहङ्ग्रह इत्याह ॥ तदीय इति ॥ भृत्यैरेवोपास्यत इति शेषः। स्वतः साक्षादैक्यात्। ननु "अग्निः माणवकः" इत्याद्युपचारो भेदज्ञानसहचरितो दृष्टः। न च प्रकृते तदस्ति। तत्कथमुपचारेणाहंग्रहोपासनमित्यतोऽत्रापि भेदज्ञानसाहित्यमस्तीति सप्रमाणकमाह ॥ प्रातिबिम्ब्येनेति ॥ ननु बिम्बत्व[2]मङ्गीकृतं चेदैक्यमेवापन्नमित्यत आह ॥ प्रातिबिम्ब्यं चेति ॥ तदधीनत्वं च ग्राह्यम्। "तदीयोऽहं" इत्युक्तत्वात्। एवशब्दस्त्वैक्यस्य व्यवच्छेदार्थः। एतेन "क्षेत्रज्ञं चापि मां विद्धि" इत्यादेरपव्याख्यानमपास्तं भवति ॥ २३ ॥

भ० गी०—

> य एवं वेत्ति पुरुषं प्रकृतिं च गुणैस्सह।
> सर्वथा वर्तमानोऽपि न स भूयोऽपि जायते ॥२४॥
> ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।
> अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ २५ ॥

---

1. ख. प्रातिबिम्ब्येनैव 2. ख. प्रतिबिम्बत्वं

अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २६ ॥

भा०—

साङ्ख्येन वेदोक्तभगवत्स्वरूपज्ञानेन । कर्मिणामपि श्रुत्वा ज्ञात्वा ध्यात्वा दृष्टिः । श्रावकाणां च ज्ञात्वा ध्यात्वा । साङ्ख्यानां च ध्यात्वा । तथा च गौपवनश्रुतिः—

"कर्मकृच्चापि तच्छ्रुत्वा ज्ञात्वा ध्यात्वाऽनुपश्यति ।
श्रावकोऽपि तथा ज्ञात्वा ध्यात्वा ज्ञान्यपि पश्यति ।
अन्यथा तस्य दृष्टिर्हि कथञ्चिन्नोपजायते" ॥

इति । 'अन्य' इत्यशक्तानामप्युपायदर्शनार्थम् ॥ २४ ॥ २५ ॥ २६ ॥

प्र० दी०—

"अन्ये साङ्ख्येन योगेन" इत्यत्र कापिलतन्त्रोक्तप्रकृतिपुरुषविवेकज्ञानं साङ्ख्यं इति व्याख्यानमसत् । कापिलतन्त्रस्यावैदिकस्यात्र ग्रहणायोगात् । तस्य भगवद्दर्शने प्रधानसाधनत्वायोगाच्चेति भावेनान्यथा व्याचष्टे ॥ साङ्ख्येनेति ॥ ज्ञानेन परोक्षज्ञानेन । ध्यानेनेत्यत्र ध्यानादीनां केवलानामेवेश्वरदर्शनसाधनत्वमुच्यत इत्यन्यथाप्रतीतिनिरासार्थमाह ॥ कर्मिणामिति ॥ दृष्टिः प्राप्येति शेषः । पाठक्रमादर्थक्रमस्य प्राधान्याद्व्युत्क्रमेणोक्तिः । कुत एतदित्यत आह ॥ तथा चेति ॥ "ध्यात्वैव" इत्येतत् "ज्ञानिन्यपि" इत्युत्तरेणापि सम्बध्यते । ननु सर्वत्र सर्वस्य संयोजने सत्येक एवायं प्रकारः स्यात् । तथा च 'केचित्', 'अन्ये', 'परे' इत्युक्तमयुक्तं स्यादित्यत आह ॥ अन्यइति ॥ ध्यानादावुत्तरोत्तरसाधने साक्षादशक्तानामपि तत्तदुपायज्ञानादिप्रदर्शनार्थमवस्थाभेदमाश्रित्य 'अन्य' इत्याद्युक्तमित्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥

भ० गी०—

यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥ २७ ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २८ ॥

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥ २९ ॥

भा०—

पुनश्च प्रकृतिपुरुषेश्वरस्वरूपं साम्यादिधर्मयुक्तमाह ॥ यावदित्यादिना ॥ २७ ॥ २८ ॥ २९ ॥

प्र० दी०—

"तत्क्षेत्रं यच्च" इति प्रतिज्ञातस्य सर्वस्योक्तत्वात् किमुत्तरेणेत्यत आह ॥ पुनश्चेति ॥ उक्तस्य पुनर्वचने को हेतुरित्यत आह ॥ साम्यादीति ॥ ईश्वरधर्मस्योभयधर्मात्प्राधान्येन साम्यग्रहणम् । तच्च प्रकृतिपुरुषधर्मकथनं "यादृक्" इति प्रतिज्ञातेऽन्तर्भवति । ईश्वरधर्मकथनं च "यत्प्रभाव" इति ॥ २७ ॥ २८ ॥ २९ ॥

भ० गी०—

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽत्मानमकर्तारं स पश्यति ॥ ३० ॥

भा०—

आत्मानं चाकर्तारं पश्यति स पश्यति ॥ ३० ॥

प्र० दी०—

"प्रकृत्यैव च" इत्यत्र यः प्रकृत्यैव च कर्माणि क्रियमाणानि पश्यति स आत्मानमकर्तारं पश्यतीति कश्चिदन्वयमाह। तदसत्। तथाशब्दवैयर्थ्यापत्तेरिति भावेनान्यथाऽऽह॥ आत्मानं चेति॥ स पश्यति परमेश्वरम्॥ ३०॥

भ० गी०—

यदा भूतपृथग्भावमेकस्थमनुपश्यति।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा॥ ३१॥

भा०—

एकस्थं, एकस्मिन्[1] विष्णौ स्थितम्। तत एव च विष्णोः विस्तारम्॥ ३१॥

प्र० दी०—

'एकस्थं' इत्यस्य एकस्थात्मकं[2] इति व्याख्यानं सर्वप्रमाणविरुद्धमिति भावेनाह॥ एकस्थमिति॥ "तत एव च विस्तारं" इत्यस्य स्वस्मादेव विश्वस्य विस्तारमिति व्याख्यानमसदिति भावेनाह॥ तत एवेति॥ विस्तारमुत्पत्तिम्॥ ३१॥

भ० गी०—

अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते॥३२॥
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते॥३३॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥३४॥

---

1. अ. एकस्मिन्नेव 2. ख. एकात्मकं

29

भा०—

न च व्ययादिस्तस्येत्याह ॥ अनादित्वात् इति ॥ सादि हि प्रायो व्ययि गुणात्मकं च। 'न करोति' इत्यादेरर्थः उक्तः पुरस्तात्। न लौकिकक्रियादिस्तस्य। अतो न प्रज्ञं इत्यादिवदिति ॥ ३२ ॥ ३३ ॥ ३४ ॥

प्र० दी०—

'अव्यय' इत्यनुवादेन लोपाभावमात्रं विधीयत इत्यन्यथाप्रतीति निरासार्थमाह ॥ न चेति ॥ एतेनाव्ययत्वमपि साध्यमप्राप्तत्वादित्युक्तं भवति। तस्य, विष्णोः। अनेन जीवविशेषणमेतत्। तस्य प्राप्तिसद्भावेन प्रतिषेधोपपत्तेरिति निरस्तम्। विष्णोरपि "शरीरस्थोऽपि" इति प्राप्तेरुक्तत्वात्। अनादिनिर्गुणत्वयोरव्ययत्वे हेतुत्वमुपपादयितुं व्याप्तिमाह ॥ सादीति ॥ यत् व्ययि तत्प्रायः सादि गुणात्मकं चेति योजना। प्रागभावे व्यभिचारवारणाय 'प्रायः' इत्युक्तम्। स साद्येव गुणात्मकमेवेत्यवधारणेन यथास्थितयोजना वा। 'न करोति', निर्गुणत्वात्' इतीश्वरस्य क्रियागुणाभावः प्रतीयत इत्यत आह ॥ न करोतीति ॥ पुरस्तादुक्तमेव स्मारयति ॥ नेति ॥ इत्यादिवदक्रियत्वादिकं व्याख्येयमिति शेषः। यद्यप्यव्ययत्वमप्यत्र साध्यम्। तथाऽपि तल्लोकतो ज्ञातुं शक्यत इति लेपाभावमात्रं "यथा सर्वगतं" इत्युपपाद्यते ॥ ३१-३४ ॥

भ० गी०—

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥२५॥

॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

भा०—

भूतेभ्यः प्रकृतेश्च मोक्षसाधनममानित्वादिकम् ॥ ३५ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीता-
भाष्ये त्रयोदशोऽध्यायः ॥ १३ ॥

प्र० दी०—

"भूतप्रकृतिमोक्षं" इत्यस्य भूतानां प्रकृतिरविद्या, तस्याः मोक्ष-मवसानलक्षणमिति व्याख्यानमसत्। भूतशब्दवैयर्थ्यात्। अविद्या-ध्वंसस्यानुक्तत्वेन 'एवं' इति परामर्शायोगाच्चेति भावेनाह ॥ भूतेभ्य इति ॥ अनेन "भूतप्रकृति" इति द्वन्द्वः। ततः, "पञ्चमी" इति योगविभागात्पञ्चमीतत्पुरुष इत्युक्तं भवति। भूतेभ्यः पृथिव्यादिभ्यः। ननु मोक्षो न प्रागुक्त इत्यत उक्तम् ॥ मोक्षसाधनमिति ॥ करणे घञ् इत्यर्थः। मोक्षसाधनमपि नोक्तमित्यत आह ॥ अमानित्वादिकमिति ॥ ज्ञानसाधनमपि परम्परया मोक्षसाधनमिति भावः। मोक्षशब्दस्य नित्यसापेक्षत्वान्नासमर्थत्वम्। यद्वा "भूतेभ्यः प्रकृतेश्च" इति समासद्वयसूचनार्थं पृथगेव वाक्यम्। ततो मोक्षपदव्याख्यानं पृथगेवेति ॥ ३५ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य
टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां
त्रयोदशोऽध्यायः समाप्तः ॥ १३ ॥

———

*

## ॥ अथ चतुर्दशोऽध्यायः ॥

भ० गी०—

श्रीभगवानुवाच—

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥१॥

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥

भा०—

॥ हरिः ॐ ॥ साधनं प्राधान्येनोत्तरैरध्यायैर्वक्ति ॥ १ ॥ २ ॥

प्र० दी०—

॥ हरिः ॐ ॥ उत्तरेषां पञ्चानामध्यायानां प्रतिपाद्यमाह ॥ साधनमिति ॥ "योगे त्विमां शृणु" इति प्रतिज्ञाय आषष्ठपरिसमाप्तेः कामवर्जनादीतिकर्तव्यतासहितं कर्मध्यानलक्षणं ज्ञानसाधनमुक्तम् । तत्र इतिकर्तव्यतांशमुत्तरैरध्यायैः प्रपञ्चयतीत्यर्थः । "मम योनिर्महद्ब्रह्म", "न तद्भासयते सूर्यः" इत्यादिनेश्वरमाहात्म्यस्यापि वचनात्कथमेतदित्यत उक्तम् । प्राधान्येनेति ॥ प्राचुर्यापेक्षया सङ्ग्राहकमेतदित्यर्थः । अवान्तरप्रतिपाद्यभेदादध्यायभेदः । तत्र "यावत्सञ्जायते किञ्चित्" इत्युक्तविवरणपूर्वकं कारणं "गुणसंयोगस्य" इत्युक्तं गुणसम्बन्धं प्रपंच्य तदत्ययसाधनमनेनाध्यायेनोच्यते ॥ १॥ २॥

भ० गी०—

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

भा०—

महत् ब्रह्म प्रकृतिः। सा च श्रीभूदुर्गेति भिन्ना। उमासरस्वत्याद्यास्तु तदंशयुता अन्यजीवाः। तथा च काषायणश्रुतिः—

"श्रीः भूः[1] दुर्गा महती तु माया
सा लोकसूतिः जगतो बन्धिका[2] च।
उमावागाद्या अन्यजीवास्तदंशाः
तदात्मना सर्ववेदेषु गीताः" ॥

इति। "मम योनिः" इति गर्भाधानार्था योनिः। न तु माता वाक्यशेषात्। तथा हि सामवेदे शार्कराक्षश्रुतौ—

"विष्णोर्योनिः गर्भसन्धारणार्था
महामाया सर्वदुःखैर्विहीना।
तथाप्यात्मानं दुःखिवन्मोहनार्थं
प्रकाशयन्ती[3] सह विष्णुना सा" ॥

इति। अतः सीतादुःखादिकं[4] मृषा प्रदर्शनमेव। तथा कूर्मपुराणे। न चेयं भूः। तथा च सौकरायणश्रुतिः—

"अन्या भूः[5] भूरियं तस्य च्छाया
भूताऽवमा सा हि भूतैकयोनिः"

इति।

"अवाप स्वेच्छया दास्यं जगतां प्रपितामही"

इति अनभिम्लानश्रुतिः। मत्स्यपुराणोक्तमपि स्वेच्छयैव। महद्ब्रह्मशब्दवाच्याऽपि प्रकृतिरेव।

---

1. अ. भूमिः 2. अ. बन्धकी 3. अ. प्रदर्शयन्ती
4. अ. 'मृषा' इत्यतः पूर्वं 'सर्वं' इत्यधिकः पाठः 5. अ. भूमिः

"महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वरः"

इति तत्रैव ॥ ३ ॥ ४ ॥

प्र० दी०—

अत्र "महद्ब्रह्म" इति जडाविद्योच्यत इति प्रतीतिनिरासार्थमाह ॥ महदिति ॥ प्रकृतिः महालक्ष्मीः । ननु "सत्त्वं रजस्तम" इति जडा प्रकृतिः वक्ष्यते । तत्सन्निधानादत्रापि सैव युक्तेति चेन्न । तत्रापि चेतनप्रकृत्यभिधानात् । कथमस्याः सत्त्वादिभेदभिन्नत्वमित्यत आह ॥ सा चेति ॥ जडप्रकृतेरभिमानिनी तत्कार्यसत्त्वादिगुणाभिमानिनी एतद्रूपत्रयवतीत्यर्थः । ननु भगवती 'माहेश्वरी, ब्राह्मी, कौमारी, माहेन्द्री, श्री, भू, दुर्गा' इति सप्तधा भिन्ना आगमेषूच्यते । तत्कथं त्रिधा भिन्नोच्यत इत्यत आह ॥ उमेति ॥ आद्याः चतस्रो भगवत्या अन्याः । कुतः ? जीवाः । कथं तद्रूपत्वोक्तिः । तदंशयुताः तत्सन्निधानोपेताः । कुत एतदित्यत आह ॥ तथा चेति ॥ "मम योनिः" इत्येतत्परे व्याचक्षते "मम स्वरूपभूता योनिः कारणं विश्वस्य । प्रतीत एव अन्वये 'मम माता' इत्यापत्तेः" इति ॥ तन्निरासार्थमाह ॥ ममेति ॥ भार्या इत्यर्थः । 'मम' इत्यनुवादेनान्यथा प्रतीतान्वयबाधः स्यादिति सूचयति । प्रतीतान्वयाङ्गीकारे 'माता' इत्यपि प्रतीयेत । तत्र कथं भार्येति निश्चय इत्यत आह ॥ न त्विति ॥ इति प्रतीतिः प्रसज्यत इति शेषः । कुतो नेत्यत आह ॥ वाक्येति ॥ "तस्मिन् गर्भं दधाम्यहं" इति वाक्यशेषाद्भार्यार्थतानिश्चयात् । श्रुतिबलाच्चेत्याह ॥ तथा हीति ॥ प्रकाशयन्ती प्रवर्तते । अनयैव श्रुत्याऽन्यदपि लब्धमिति प्रसङ्गादाह ॥ अत इति ॥ मृषा अयथार्थं प्रदर्शनं यस्य तत्तथा । इतश्चैवमेवेत्याह ॥ तथेति ॥ तत्र ह्येवमुक्तम्—

"दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः ।
रामायादर्शयत्सीतां पावकोऽसौ सुरप्रियः" ॥

इत्यादि । ननु महालक्ष्मीः 'श्री, भू, दुर्गा, इति भिन्नेत्युक्तम् । भुवश्च—

"गौर्भूत्वाऽश्रुमुखी खिन्ना"

इति दुःखं प्रतीयते। तत्कथं तदित्यत आह॥ न चेति॥ इयं भूताभिमानिनी प्रसिद्धा भूः भगवत्या रूपं न भवति। किन्त्वन्यैव। कुत इत्यत आह॥ तथा चेति॥ महालक्ष्मीरूपं भूः अन्या। इयं प्रसिद्धा तस्याः छाया प्रतिमा। ननु रावणहरणादिकं भवतु मायासीतायाः। वाल्मीकिदास्यं तावन्मत्स्यपुराणे साक्षात्सीताया एवोक्तम्। दास्ये च दुःखमवर्जनीयमित्याशङ्कां प्रमाणपूर्वकमपाकरोति॥ अवापेति॥ श्रुतिरस्ति यतः, अत इति शेषः। महद्ब्रह्म प्रकृतिरित्युक्तम्। तत्र प्रमाणं वक्तुं व्यवहितत्वात्पुनः प्रतिजानीते। महदिति॥ 'महत् ब्रह्म' इति भिन्ने पदे। ततः परं इतिशब्दः अध्याहार्यः। कुत इत्यत आह॥ महतीति॥ तत्रैव मत्स्यपुराणे। अर्थक्रमेण "मम योनिः महत् ब्रह्म" इत्यत्र व्युत्क्रमेण व्याख्यानम्। मत्स्यपुराणोदाहरणप्रसङ्गादत्रोपपादनमिति॥ ३॥ ४॥

भ० गी०—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम्॥ ५॥

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ॥ ६॥

भा०—

बन्धप्रकारं दर्शयति साधनानुष्ठानाय॥ सत्त्वमित्यादिना ॥५॥६॥

प्र० दी०—

ननु प्रतिज्ञातं ज्ञानं श्लोकद्वयेनोक्तम्। तत्किमुत्तरेण ग्रन्थेनाध्यायासङ्गतमुच्यत इत्यत आह॥ बन्धेति॥ यो हि बद्धोऽस्मीति जानाति स एव तन्निवृत्तिसाधनं विजिज्ञास्य ज्ञात्वा अनुतिष्ठति। अतो

बन्धोच्छेदसाधनानुष्ठानाय तज्ज्ञापनार्थं जिज्ञासामुत्पादयितुं गुणत्रय-कृतबन्धप्रकारमादौ तावद्दर्शयतीति नासङ्गतिरित्यर्थः ॥ ५ ॥ ६ ॥

भ० गी०—

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥

भा०—

तृष्णासङ्गयोः समुद्भवं, तयोः कारणम् ॥ ७ ॥

प्र० दी०—

अत्र रजः "तृष्णासङ्गसमुद्भवं" इत्यस्य तृष्णासङ्गाभ्यां समुद्भवो यस्येत्यपव्याख्यानमिति भावेन विग्रहप्रदर्शनपूर्वकमर्थमाह ॥ तृष्णेति ॥ समुद्भवति अस्मादिति समुद्भवं कारणम् । अन्यथा "प्रकृतिसम्भवाः" इत्युक्तविरोधात् । समुद्भवशब्देनाविर्भावो विवक्षित इति चेत् । तथाऽपि गुणकार्यकथनप्रकरणविरोधात् ॥ ७ ॥

भ० गी०—

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

भा०—

अज्ञातं जायते यतः तदज्ञानजम् । "प्रमादमोहौ तमसः" इति वाक्यशेषात् ॥ ८ ॥

प्र० दी०—

"तमस्तु अज्ञानजं" इत्यस्य अज्ञानाज्जातमित्यपव्याख्यां प्रत्याख्यातुमाह ॥ अज्ञानमिति ॥ एतच्च "अन्येष्वपि दृश्यते" इति दृशिग्रहणसामर्थ्याल्लभ्यते । कुतः प्रतीत एवार्थो नेत्यत आह ॥ प्रमादेति ॥ वाक्यशेषेऽज्ञानस्य तमःकार्यत्ववचनादित्यर्थः ॥ ८ ॥

भ० गी०—

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥

रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजस्सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्यात् विवृद्धं सत्त्वमित्युत ॥ ११ ॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥

ऊर्ध्वं गच्छन्ति सत्त्वस्थाः मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्थाः अधो गच्छन्ति तामसाः ॥१८

भा०—

रजसस्तु फलं दुःखमित्यल्पसुखं दुःखम्। तथा हि शार्कराक्ष्यशाखायाम्—

"रजसो ह्येव जायते मात्रया सुखं दुःखं;
तस्मात्तान् सुखिनो दुःखिन इत्याचक्षते"

इति। अन्यथा दुःखस्यातिकष्टत्वात्तमोऽधिकत्वं रजसो न स्यात् ॥९-१८॥

प्र० दी०—

दुःखशब्दः केवलदुःखवाचीत्यन्यथाप्रतीतिनिरासायाह॥ रजस इति॥ दुःखशब्देनोच्यत इति शेषः। तत्कथमित्यत उक्तम्॥ अल्पेति॥ अल्पत्वात्सुखस्याविवक्षेति भावः। कुत इत्यत आह॥ तथा हीति॥ "रजस" इति पञ्चमी। 'मात्रया' इति सुखविशेषणम्। स्तोकात्मकं सुखं दुःखं चेत्यर्थः। तान् राजसकर्मिणः। केवलदुःखार्थाङ्गीकारे बाधकं चाह॥ अन्यथेति॥ अतिकष्टत्वादज्ञानादपि कष्टत्वात्। तत्फलकस्य रजसः। तथा च "मध्ये तिष्ठन्ति राजसाः", "अधो गच्छन्ति तामसाः" इत्याद्ययुक्तं स्यादिति भावः॥९-१९॥

भ० गी०—

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति॥१९॥

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान्।
जन्ममृत्युजरादुःखैः विमुक्तोऽमृतमश्नुते ॥२०॥

अर्जुन उवाच—

कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो।
किमाचारः कथं चैतान् त्रीन् गुणानतिवर्तते ॥२१

भा०—

परिणामिकर्तारं गुणेभ्योऽन्यं न पश्यति। अन्यथा
"यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम्"
इति श्रुतिविरोधः।
"नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः"
इति मोक्षधर्मे ॥ १९-२१ ॥

प्र० दी०—

"नान्यं गुणेभ्यः कर्तारं" इति स्वतन्त्रकर्तृत्वं गुणानामेव नान्यस्येत्युच्यत इत्यपव्याख्याननिरासार्थमाह ॥ परिणामीति ॥ कुत एतदित्यत आह ॥ अन्यथेति ॥ गुणेभ्योऽन्यस्य कर्तृत्वाभावे। मोक्षधर्मे परमेश्वरस्य कर्तृत्वमुक्तं, तद्विरोधश्चेति वाक्यशेषः ॥ १९-२१ ॥

भ० गी०—

श्रीभगवानुवाच—

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव।
न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥२२॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥
समदुःखसुखस्वस्थः समलोष्टाश्मकाञ्चनः।
तुल्यप्रियाप्रियो धीरः तुल्यनिन्दाऽऽत्मसंस्तुतिः ॥ २४ ॥

भा०—

प्रायो न द्वेष्टि, न काङ्क्षति। तथा हि सामवेदे भाल्लवेयशाखायाम्—

"रजस्तमस्सत्त्वगुणान् प्रवृत्तान् प्रायो
न च द्वेष्टि न चापि काङ्क्षति।
तथाऽपि सूक्ष्मं सत्त्वगुणं च काङ्क्षेत्
यदि प्रविष्टं सुतमश्च जह्यात्" इति ॥

"न हि देवा ऋषयश्च सत्त्वस्था नृपसत्तम।
हीनास्सत्त्वेन सूक्ष्मेण[1] ततो वैकारिका मताः।
कथं वैकारिको गच्छेत् पुरुषः पुरुषोत्तमम्" ॥

इति[2] मोक्षधर्मे।

"सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चितः"

इति च ॥ २२-२३ ॥

प्र० दी०—

"प्रकाशं च प्रवृत्तिं च" इत्यनेन गुणातीतस्य सर्वथा सत्त्वादिगुणकार्येषु प्रकाशादिषु द्वेषाकाङ्क्षे न स्त इत्युच्यत इत्यन्यथाप्रतीतिनिरासार्थमाह ॥ प्राय इति ॥ इदमुक्तं भवति। सत्त्वादयो गुणाः द्विविधाः स्थूलाः सूक्ष्माश्च। तत्र स्थूलेभ्यो लौकिकाः प्रकाशप्रवृत्तिमोहाः जायन्ते। सूक्ष्मेभ्यश्च परमेश्वरादिविषयाः। तत्राद्येषु गुणातीतस्य द्वेषाकाङ्क्षे प्रायो न स्तः। न तु सर्वथा; प्रारब्धवशात् कदाचित् सम्भवात्। द्वितीयेषु त्वाकाङ्क्षादिकं विद्यत एवेति। कुत एतदित्यत आह ॥ तथा हीति ॥ यद्यपि "न द्वेष्टि" इत्यादिकमुक्तम्। तथाऽपि यदि सुतमः सूक्ष्मतमः दैववशात्तं प्रविष्टं स्यात्। तदाऽसौ तज्जह्यात् द्विष्यात्। गुणातीतानां च सूक्ष्मसत्त्वसद्भावे भारतवाक्यं च पठति ॥ न हीति ॥ यदि देवा ऋषयश्च सूक्ष्मेण सत्त्वेन हीनाः स्युः, तदा सत्त्वस्था इति नोच्येरन्। किं तु ततस्तदा

1. अ. सूक्ष्मेण सत्त्वेन 2. अ. इति हि

वैकारिकाः स्मृताः प्रसज्येरन् । ततः किं, कथं वैकारिको गच्छेत् पुरुषोत्तमम् । तेषां मोक्षो न स्यादिति यावत् । अस्ति च मोक्षो तेषाम् । अतः सूक्ष्मसत्त्ववन्त एव त इत्यर्थः । सात्त्विकः सूक्ष्मसत्त्ववान् ।

"स सूक्ष्मसत्त्वसंयुक्तः संयुक्तस्त्रिभिरक्षरैः ।
पुरुषः पुरुषं गच्छेन्निष्क्रियः पञ्चविंशकः" ॥

इति सूक्ष्मसत्त्वप्रकरणात् । मोक्षार्थनिश्चितो मोक्षलक्षणे पुरुषार्थे निश्चितः ॥ २२-२४ ॥

भ० गी०—

**मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।**
**सर्वारम्भपरित्यागी गुणातीतस्स उच्यते ॥ २५ ॥**

भा०—

तुल्यत्वार्थः उक्तः पुरस्तात् ॥ २५ ॥

प्र० दी०—

"समदुःखसुखः" इत्यादिना सर्वथा सुखादौ तुल्यत्वबुद्धिरुच्यत इत्यन्यथाप्रतीतिनिरासार्थमाह ॥ तुल्यत्वेति ॥ तुल्यत्ववाचिनः शब्दस्यार्थ इत्यर्थः । "प्रायः सर्वान्" इत्याद्युक्तरीत्येति भावः ॥ २५ ॥

भ० गी०—

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६**

भा०—

ब्रह्मवत् प्रकृतिवत् भगवत्प्रियत्वं ब्रह्मभूयम् । न तु तावत्प्रियत्वम् । किं तु प्रियत्वमात्रम् ।

"बद्धा वापि तु मुक्ता न रमावत् प्रिया हरेः"

इति पाद्मे । भूयाय भावाय ॥ २६ ॥

प्र० दी०—

ब्रह्मभूयायेत्यस्य परब्रह्मत्वायेति व्याख्यानं प्रमाणविरुद्धमिति

भावेनान्यथा व्याचष्टे ॥ ब्रह्मवदिति ॥ नात्र ब्रह्मशब्दं परं ब्रह्म। किं तु "मम योनिर्महद्ब्रह्म" इति प्रकृता प्रकृतिरेव। "ब्रह्मणो हि प्रतिष्ठाऽहं" इत्युत्तरवाक्यात्। तद्भूयं च न तादात्म्यं किं तु तद्वत् भगवत्प्रियत्वमेव। अन्यस्यान्यभावायोगादिति भावः। तत्किं यावत्प्रकृतेः भगवत्प्रियत्वं तावत् गुणातीतस्येत्यतः सप्रमाणमाह ॥ न त्विति ॥ तत्किं भूयशब्दः प्रियत्ववाची, येनैवं व्याख्यात इत्यत आह ॥ भूयाय इति ॥ "भुवो भावः" इति वचनात् भावो भवनं भूयशब्दार्थः। ब्रह्मवत् भावो ब्रह्मभूयम्। "वदः सुपि" इति सुबन्तमात्रस्योपपदस्यानुवृत्तेः। वत्यर्थस्य च वृत्तावन्तर्भावात्। मयूरव्यंसकादिवत्। वत्यर्थश्च प्रियत्वमिति तदुक्तमिति भावः ॥ २६ ॥

भ० गी०—

ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥२७॥

॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभक्तियोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

भा०—

ब्रह्मणो मायायाः ॥ २७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीता-
भाष्ये चतुर्दशोऽध्यायः ॥ १४ ॥

प्र० दी०—

"ब्रह्मणो हि" इत्येतत् "परब्रह्मणो हि" इति व्याचक्षते। तदसत्। "प्रतिष्ठाऽहं" इति वचनात्। उपचारोऽसौ इति चेन्न। मुख्ये सम्भवति तदुपादानायोगादिति भावेनाह ॥ ब्रह्मण इति ॥ मायेति प्रकृता महालक्ष्मीः ॥ २७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य
टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां
चतुर्दशोऽध्यायः समाप्तः ॥ १४ ॥

## ॥ अथ पञ्चदशोऽध्यायः ॥

भ० गी०—

श्रीभगवानुवाच—

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥१॥

भा०—

॥हरिः ॐ॥ संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्याये दर्शयति। ऊर्ध्वो विष्णुः।

"ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि
द्रविणँ सवर्चसम्" इति हि श्रुतिः।

ऊर्ध्वः उत्तमः सर्वतः। अधो निकृष्टं शाखा भूतानि। श्वोऽपि एकप्रकारेण न तिष्ठतीत्यश्वत्थः। तथापि न प्रवाहव्ययः। पूर्वब्रह्मकाले यथा स्थितिः तथा सर्वत्रापीत्यव्ययता। फलकारणत्वात् च्छन्दसां पर्णत्वम्। न हि कदाचिदप्यजाते पर्णे फलोत्पत्तिः ॥ १ ॥

प्र० दी०—

अध्यायप्रतिपाद्यमर्थमाह ॥ संसारेति॥ संसरति अनेनेति संसारः, प्रकृत्यादिकं क्षेत्रम्। पूर्वाध्याये संसारैकदेशानां गुणानामेव वृत्तं दर्शितम्। अत्र पुनः समग्रं संसारस्वरूपं प्रदर्श्य तदत्ययेच्छामुत्पाद्य तत्साधनजिज्ञासुं प्रति प्रागुक्तं साधनं प्रपञ्चयति। तत्प्रसङ्गादलौकिकं भगवन्महिमानं च दर्शयत्यनेनाध्यायेनेत्यर्थः। जगद्वृक्षस्योर्ध्वमूलत्वं घटयितुमूर्ध्वशब्दाभिधेयं[1] तावदाह ॥ ऊर्ध्व इति॥ कुतः ? श्रौतप्रयोगादित्याह ॥ ऊर्ध्वेति॥ आदौ तावदहमूर्ध्वेन विष्णुना पवित्रो निष्पापोऽस्मि ततो वाजिरूपश्च नेता च। वाजिनीः

1, क. ऊर्ध्वशब्दाभिप्रायं

सूर्यः। तत्र वसतीति वाजिनीवसुः। तेन वाजिनीवसुना विष्णुनाऽमृतं प्रारब्धकर्मनिर्मुक्तश्चास्मि। "स तेजसि सूर्ये सम्पन्नः" इति श्रुतेः। ततश्च तेनैव सवर्चसं सप्रभमनुभूयमानमिति यावत्। द्रविणं धनं सुखं चास्मीत्यर्थः। वर्चसशब्दो अकारान्तोऽप्यस्ति। "ब्रह्महस्तिभ्यां वर्चस" इत्यत्र योगविभागात्समासान्तो वा। विष्णुप्रसङ्गदर्शनाय श्रुतिशेषोदाहरणम्। इदानीं तस्य तत्र प्रवृत्तौ निमित्तमाह॥ ऊर्ध्व इति॥ उन्नतो हि ऊर्ध्व उच्यते। अतो ब्रह्मादिलोकस्थत्वादिलक्षणा सूक्ष्मत्वादिगुणयोगो वा नाऽश्रयणीयः। सर्वतः सर्वस्मात् प्रपञ्चात्। सर्वैश्च गुणैः। अधःशाखं इत्येतद्घटयन् अधःशब्दार्थं तावदाह॥ अध इति॥ शाखाः का इत्यत आह॥ शाखा इति॥ तानि हि मूलापेक्षया अपकृष्टानि। ननु वृक्षमात्रस्य सारूप्यमभिदधता कथमश्वत्थत्वमस्योच्यत इत्यत आह॥ श्वोऽपीति॥ "सुपि स्थ" इति कः। श्वसः सकारस्य तकारो धातुसकारस्य लोपश्च निरुक्तत्वात् श्वस्थाता श्वः स्थः। श्वत्थो न भवतीत्यश्वत्थः। किमुत कालान्तरे इत्यपिशब्दः। ननु पदार्थानां बहुकालस्थायित्वदर्शनात्कथमेतदित्यत आह॥ एकेति॥ "तिष्ठति" इति लुङर्थे अनादरसूचनाय लट्। अथवा अपिशब्देन वर्तमानातीतयोः समुच्चयः। ततः क्रियाप्रबन्धे लट्। तर्हि "अव्ययं" इति व्याघात इत्यत आह॥ तथाऽपीति॥ विकारित्वेऽपि। एतदपि नास्ति। जगत्प्रवाहस्य प्रलये व्ययादित्यत आह॥ पूर्वेति॥ छन्दसां पर्णत्वं घटयति॥ फलेति॥ फलकारित्वसादृश्यादित्यर्थः। तत्र फलं मोक्षादिकम्। छन्दसां वेदानाम्। स्यादिदं, यदि पर्णानां फलकारणत्वं स्यात्। तदेव कुतः? अन्वयव्यतिरेकाभ्यामित्याह॥ न हीति॥ किं तु जात एवेत्यन्वयोऽपि वाच्यः॥ १॥

भ० गी०—

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः।

अधश्च मूलान्यनुसन्ततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥

भा०—

अव्यक्तेऽपि सूक्ष्मरूपेण सन्ति शरीरादौ भूतानीत्यधश्चोर्ध्वं च प्रसृताः। गुणैः सत्त्वादिभिः। प्रतीतिमात्रसुखत्वात्प्रवाला विषयाः। मूलानि भगवद्रूपादीनि। भगवानपि कर्मानुबन्धेन हि फलं ददाति। तथा च[1] भाल्लवेयशाखायां—

"ब्रह्म वा अस्य पृथङ्मूलं, प्रकृतिः समूलं, सत्त्वादयो अर्वाचीनमूलम्।

भूतानि शाखा छन्दांसि पर्णानि[2] देवा नृतिर्यञ्चश्च शाखाः। पत्रेभ्यो हि फलं जायते। मात्राः शिफाः। मुक्तिः फलममुक्तिः फलम्। मोक्षो रसः अमोक्षो रसः। अव्यक्ते च शाखाः। व्यक्ते च शाखाः। अव्यक्ते च मूलं व्यक्ते च मूलम्। एषोऽश्वत्थो गुणालोलपत्रो न स्थीयते न न स्थीयते; न ह्येष कदाचनान्यथा जायते, नान्यथा जायते" इति ॥ २ ॥

प्र० दी०—

"अधश्च" इत्येतद्घटयति ॥ अव्यक्तेऽपीति ॥ अनेन तस्य शाखा भूतान्यधश्च स्वापेक्षयाऽपकृष्टे शरीरादौ कार्ये चोर्ध्वं चोत्तमे कारणेऽव्यक्ते च प्रसृताः सूक्ष्मरूपेण सन्तीति व्याख्यातं भवति। प्रसृता इत्यनेनोच्यत इति शेषः। अधः पातालादौ ऊर्ध्वं स्वर्गादाविति व्याख्याने प्रकृतपरित्यागाप्रकृतप्रक्रिये प्रसज्येते। गुणशब्दस्यानेकार्थत्वात् 'गुणप्रवृद्धाः' इत्यत्र विवक्षितमर्थमाह ॥ गुणैरिति ॥ अर्वाचीनमूलैर्हि शाखाः प्रवृद्धा भवन्ति। सत्त्वादयश्च अर्वाचीनमूला इति वक्ष्यन्ते। विषयाणां प्रवालत्वं घटयति ॥ प्रतीतिमात्रेति ॥ प्रतीतिसमयमात्रसुखहेतुत्वादित्यर्थः। विमर्दनासहत्वसाम्यादिति

1. अ. हि 2. अ. पर्णानि

भावः। विषयाः प्रवाला इति सम्बन्धः। "अधश्च मूलानि" इत्यत्र रागद्वेषादिवासनामूलानीति व्याख्यानमसत्। प्रक्रमविरोधादिति भावेनाह॥ मूलानीति॥ आदिपदेन जडाजडप्रकृत्योः सत्त्वादीनां च ग्रहणम्। तेषामपि "ऊर्ध्वमूलं" इत्यत्र विवक्षितत्वात्। ननु भगवतः कथं कर्मानुबन्धित्वमित्यत आह॥ भगवानपीति॥ अत्र कर्मानुबन्धित्वं नाम कर्मानुसारित्वम्। तच्च कर्मसम्बन्धेन फलदातृत्वाद्भगवतोऽपि युक्तमित्यर्थः। यद्वा कर्म एवानुबन्धः चरमभाविकारणं कर्मानुबन्धः। तद्वत्त्वं कर्मानुबन्धित्वम्। तदपि कर्मानुबन्धेन फलदातृत्वाद्भगवतो युज्यत इति। श्लोकद्वयार्थे श्रुतिसम्मतिं चाह॥ तथा चेति॥ अस्य जगद्वृक्षस्य, पृथक् वृक्षानन्तर्गतम्। सहभूतं मूलं समूलम्। अर्वाचीनमूलं भूम्यन्तर्गतपादाख्यम्। 'छन्दांसि' इत्यस्योपपादनम्॥ पत्रेभ्यो हीति॥ देवादिशरीराणि चोपशाखाः। मात्राः भूतसूक्ष्माणि। शिफाः जडाः। मुक्त्यमुक्तिशब्दाभ्यां मोक्षतदितरपुरुषार्थसाधने ज्ञानकर्मणी उच्येते। फलमवान्तरम्। मोक्षामोक्षशब्दाभ्यां तु पुरुषार्थविव। रसः श्रेष्ठं फलम्। गुणाः विषयाः। आलोलपत्राणि प्रवालपत्राणि यस्यासौ तथोक्तः। "न स्थीयत" इत्यनेनाश्वत्थशब्दार्थकथनम्। तत्किं क्षणिकः? न न स्थीयते प्रवाहव्ययो नास्तीत्यर्थः। तस्योपपादनम्॥ न हीति॥ द्विरुक्तिस्तात्पर्यार्था॥ ३॥

भ० गी०—

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च सम्प्रतिष्ठा।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्वा॥ ३॥

भा०—

यथा स्थित[1]स्तथा नोपलभ्यते। अन्तादिर्विष्णुः। "त्वमादिरन्तो जगतोऽस्य मध्यं" इति भागवते।

"अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः"

इति च मोक्षधर्मे। असङ्गशस्त्रेण, सङ्गराहित्यसहितेन ज्ञानेन।

"ज्ञानासिनोपासनया सितेन" इति भागवते।

छेदश्च विमर्श एव। ततश्च तस्यैवाबन्धकं भवति। तथा हि मूलस्थं ब्रह्म प्रतीयते। तच्चोक्तं तच्छ्रुतावेव—

"विमर्शो ह्यस्य च्छेदः। स[2] तं न बध्नाति
बध्नाति चान्यान्"

इति ॥ ३ ॥

प्र० दी०—

अस्य रूपं नोपलभ्यत इत्युक्ते प्रमाणबाधः। अत उक्तम् ॥ तथेति ॥ तत्सापेक्षमित्यतः पूरयति ॥ यथेति ॥ विकारित्वादिनेत्यर्थः। जगतो देशकालाभ्यां परिच्छेदस्योपलभ्यमानत्वान्नान्त इत्याद्युक्तमयुक्तमित्यत आह ॥ अन्तादिरिति ॥ संहर्तृत्वादेरिति शेषः। अत्र संमतिमाह ॥ त्वमिति ॥ मध्यं स्थितेः कर्ता। तस्यानुपलभ्यमानत्वे प्रमाणमाह ॥ अनादीति ॥ आद्यन्तरहितम्। असङ्ग एव शस्त्रमिति व्याख्यानमसदिति भावेनाह ॥ असङ्गेति ॥ असङ्गः सङ्गराहित्यम्। तेन सहितं ज्ञानमसङ्गशस्त्रम्। दध्योदनादिवद्वृत्तौ साहित्यस्यान्तर्भावादप्रयोग इति भावः। प्रतीतार्थः कुतो नेत्यतो ज्ञानस्यैव तत्र कारणत्वेनोक्तेरित्याह। ज्ञानेति ॥ छित्त्वेत्यस्य सबीजमुद्धृत्येति व्याख्यानमसदिति भावेनाह ॥ छेदश्चेति ॥ चस्त्वर्थः। विमर्शो विवेकः। व्याख्यानान्तरपरित्यागेनैवं व्याख्याने को हेतुरित्यत आह ॥ ततश्चेति ॥ यतो विमर्श एव प्रकृत्यादेः विश्वस्य च्छेदः, न सर्वथोद्धरणम्।

---

1. अ. स्थितिः　　2. अ. "स" इति न पठ्यते

*

तत एव तस्यैकस्यैवेदमबन्धकं भवतीति युज्यते। अन्यथा एकेनच्छेदे कृते सर्वमुक्तिः स्यादिति भावः। इतश्चायमेव च्छेद इत्याह॥ तथा हीति॥ अत्र ह्यश्वत्थमेनं छित्वा "ततः परं तत् परिमार्गितव्यं" इति विश्वच्छेदस्य ब्रह्मप्रतीतावुपायत्वमुच्यते। तथा हि। विश्वस्य कार्यत्वादिना विमर्शे सति कार्यस्य कारणापेक्षत्वात् चेतनानधिष्ठितादुपादानादुत्पत्त्यसम्भवात्परतन्त्राणां मुख्यतो अधिष्ठातृत्वायोगान्मूलस्थमुपादानकारणाधिष्ठातृ ब्रह्म प्रतीयते न विश्वविनाशे। अतो योग्यतावशाद्विमर्श एव च्छेदो न विनाश इति गम्यत इत्यर्थः। विश्वमिथ्यात्वज्ञानमेव च्छेद इति चेन्न। अस्य मिथ्याज्ञानत्वात्। श्रुतिसंवादाच्चैवमेवेत्याह॥ तच्चेति॥ 'तं वै प्रपद्ये यं वै प्रपद्ये' इति तच्छ्रुतावेव[1]। अतस्तं च्छेदकमेव॥ ३॥

भ० गी०—

ततः परं तत्परिमार्गितव्यं
यस्मिन् गता न निवर्तन्ति भूयः।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी॥ ४॥

भा०—

तदर्थं च तमेव प्रपद्ये, प्रपद्येत। तच्चोक्तं तत्रैव "तं वै प्रपद्येय यं वै प्रपद्य न शोचति न हृष्यति न जायते न म्रियते तद्ब्रह्म मूलं तत् च्छित्सुः[2]" इति।

"नारायणेन दृष्टश्च प्रतिबद्धो भवेत् पुमान्"

इति च मोक्षधर्मे। च्छेदनोपायो ह्यत्राकाङ्क्षितः। न च भगवतोऽन्यः शरण्योऽस्ति॥ ४॥

---

1. क. ख. "तं वै प्रपद्ये यं वै प्रपद्य इति तच्छ्रुतावेव" इति वाक्यं न दृश्यते।
2. अ. चिच्छित्सुः

प्र० दी०—

वाक्यार्थस्यासमाप्तत्वात् "तमेव चाद्यं" इति व्यर्थमित्यतः सङ्गतिं सूचयन्नाह ॥ तदर्थं चेति ॥ विमर्शार्थं चेति । विश्वविमर्शाद्ब्रह्मज्ञानं भवतु । स विमर्श एव कथं स्यादित्याकांक्षां तदर्थमित्यनेन सूचयति । तर्हि चिच्छिदिषुं प्रति तदुपायो विधेयो न तु प्रपद्य इति वचनं सङ्गतमित्यतो "व्यत्ययो बहुलं" इति वचनमाश्रित्याह ॥ प्रपद्येतेति ॥ कुतो व्यत्यय इत्यतः श्रुतिस्मृतिसंवादित्याह ॥ तच्चेति ॥ तद्विश्वं छित्सुः । अभ्यासलोपः इडभावश्च छांदसः । चिच्छिदिषुः विश्वविमर्शार्थी यस्तद्ब्रह्म विश्वस्य मूलं तमेव पुरुषं प्रपद्येत इत्यर्थः । प्रपत्त्या प्रसन्नेन नारायणेन दृष्टः पुमान् प्रतिबद्धो विश्वविमर्शक्षमो भवेदित्यर्थः । इतश्च पुरुषव्यत्ययोऽत्र व्याख्येय इत्याह ॥ च्छेदेनेति ॥ अतस्तदुपायविधानमेव सङ्गतमिति शेषः । न केवलं उत्तमपुरुषोऽत्रानुपयुक्तः । किन्त्वयुक्तश्चेत्याह ॥ न चेति ॥ 'तमेव प्रपद्य इत्येवं-परिमार्गितव्यं' इति सम्बन्धस्त्वयुक्तः । अस्य परिमार्गणत्वाभावात् ॥ ४ ॥

भ० गी०—

निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसञ्ज्ञैः
गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥

भा०—

साधनान्तरमाह ॥ निर्मानेति ॥ ५ ॥

प्र० दी०—

तर्हि ब्रह्मज्ञानसाधनं विश्वविमर्शः । तत्र साधनं च तत्प्रपत्तिरिति समस्तमुक्तं, किमुत्तरेणेत्यत आह ॥ साधनान्तरमिति ॥ ॥ ५ ॥

भ० गी०—

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥७॥

भा०—

स्वरूपं कथयति ॥ न तदित्यादिना ॥ ६ ॥ ७ ॥

प्र० दी०—

उत्तरवाक्यानां सङ्गत्यप्रतीतेस्तां सूचयन्नाह ॥ स्वरूपमिति ॥ अनेन कीदृशं तत्पदं यत्प्राप्तिः पुरुषार्थ इत्याकाङ्क्षयामिदमुच्यत इत्युक्तं भवति । 'स्वरूपं' इत्यनेन 'पदं' इत्युक्तस्य 'धाम' इति वक्ष्यमाणस्य चार्थोऽप्युक्तो भवति । स्थानतेजसोः असङ्गतत्वात् ॥ ६ ॥ ७ ॥

भ० गी०—

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

भा०—

'कर्षति' इत्युक्ते जीवस्य स्वातन्त्र्यं प्रतीतम् । तन्निवारयति । शरीरमित्यादिना ॥ यद्यदा शरीरमवाप्नोत्युत्क्रामति[1] जीवः तदा ईश्वर एव एतानि गृहीत्वा संयाति ।

"यत्र यत्र च संयुक्तो धाता गर्भं पुनः पुनः ।
तत्र तत्रैव वसति न तत्र स्वयमिच्छति" ॥

इति[2] मोक्षधर्मे ।

---

1. अ. उत्क्रामति च जीवः 2. अ. इति हि

"भावाभावावपि[1] जानन् गरीयो जानामि
श्रेयो न तु तत् करोमि ।
आशासु हर्म्यासु हृदासु कुर्वन्
यथा नियुक्तोऽस्मि तथा वहामि" ॥

इति च ।

"हत्वा जित्वाऽपि मघवन् यः कश्चित् पुरुषायते ।
अकर्ता त्वेव भवति कर्ता त्वेव करोति तत्" ॥

इति च ।

"तद्यथाऽनः सुसमाहितं उत्सर्जद्यायात् ।
एवमेवायं शारीर आत्मा प्राज्ञेनान्वारूढ[2]
उत्सर्जद्याति" इति च

श्रुतिः ।

"वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि
तेजः परस्यां देवतायां" इति च ॥

गन्धानिव सूक्ष्माणि । भोगो अस्यापि साधितः पुरस्तात् ॥ ८ ॥

प्र० दी०—

पूर्ववाक्ये जीवस्य प्रकृतत्वात्तदुत्तरमपि तद्विषयमिति व्याख्यानमसत् । ईश्वरपदरूढार्थपरित्यागदोषादित्याशयवान् सङ्गतिं तावदाह ॥ कर्षतीति ॥ शरीरावाप्तौ मूलकारणात्, उत्क्रमणे शरीरात्, स्थितौ गोलकादिभ्यो विषयान् प्रतीन्द्रियाणि जीवः कर्षतीति पूर्वत्रोक्तम् । तथा च तस्य नियामकान्तरानुक्त्या इन्द्रियकर्षणे स्वातन्त्र्यं प्रतीतम् । तदयुक्तम् । पूर्वोक्तविरोधादित्याशङ्क्येश्वरस्यैव , तत्प्रतिपादयन् तज्जीवस्य स्वातन्त्र्यं निवारयतीत्यर्थः । श्लोकद्वयोपादानायादिपदम् । अत्र शरीरावाप्त्युत्क्रमणयोरुक्तत्वादीश्वरस्य तदयोगात्कथमिदं तद्विषयमित्यतो व्याचष्टे ॥ यदिति ॥ 'जीव' इति पूर्ववाक्यादनुवर्तते । 'यदा' इति श्रवणात् 'तदा' इति लभ्यते । एतानि इन्द्रियाणि । संयाति शरीरम् । लोकान्तरं च । कुतोऽयमर्थ इत्यतो जीवस्य

1. अ. अविज्ञानन्　　2. अ. प्राज्ञेनात्मनान्वारूढः

शरीरप्राप्तौ तावदीश्वराधीनत्वे प्रमाणसंमतिमाह ॥ यत्रेति ॥ संयुक्तः प्रेरकत्वेन संयुक्तः। यत्र यत्रैव योनौ गर्भधाता तत्र तत्रैव वसति जीवः। प्रवृत्तावपीश्वराधीनत्वे जीवस्य प्रमाणसंवादमाह ॥ भावेति ॥ भावाभावौ लौकिके शुभाशुभे। गरीयः श्रेयो मोक्षमपि। तथाऽपि तन्न करोमि, साधयितुं न स्वतन्त्रोऽस्मि। किन्त्वाशासु, दिक्षु, हर्म्यासु हर्म्येषु, ह्रदासु ह्रदेषु। तास्ताः क्रियाः कुर्वन्निव प्रतीयमानोऽहं यथेश्वरेण नियुक्तोऽस्मि तथा ता वहामि। हननादि-क्रियाः कृत्वा यः कश्चित् परमपुरुषवत् स्वातन्त्र्यमात्मनो मन्यते सोऽप्यकर्तैव भवति। यतः तद्धननादिकर्ता ईश्वर एव करोति। शरीरोत्क्रमणमपीश्वराधीनमित्यत्र श्रुतिसंमतिमाह ॥ तद्यथेति ॥ आनः शकटम्। सुसमाहितं पुरुषेण सम्यगधिष्ठितम्। उत्सर्जत् ग्रामादिकं उत्सृजत्। शारीर आत्मा, जीवः। प्राज्ञेनात्मना परमात्मना अन्वा-रूढोऽधिष्ठितः। उत्सर्जत् शरीरं उत्सृजत्। "वाक्" इत्यनेन उत्क्रमणे परदेवता वागादीन्याकर्षतीत्युच्यते। अनेकेष्वाकृष्यमाणेषु सत्सु गन्धोपादानेऽभिप्रायमाह ॥ गन्धानिवेति ॥ गन्धवतः पुष्पाद्य-वयवानित्यर्थः। ननु "श्रोत्रं" इत्यादिना विषयभोगोऽस्योच्यते। न चेश्वरस्यासावस्ति। किं तु जीवस्यैव। तत्कथमिदमीश्वरविषय-मित्यत आह ॥ भोग इति ॥ पुरस्तात् सप्तमे ॥ ८ ॥

भ० गी०—

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

भा०—

इन्द्रियद्वाराऽपि सोऽपि भुङ्क्ते।

"तद्य इमे वीणायां गायन्ति एतं ते गायन्ति"[1]

इति च श्रुतिः। गुणान्वितमेव भुङ्क्ते।

"न ह वै देवान् पापं गच्छति" इति श्रुतेः ॥ ९ ॥

1. अ. एतं ते गायन्ति इति न पठ्यते

प्र० दी०—

अस्तीश्वरस्य भोगः। किं तु जीवेन्द्रियैर्नास्तीत्यतो जीवविषय-मेतदित्यत आह॥ इन्द्रियेति॥ 'राजाद्यन्तर्गतं गायन्ति' इत्यनेन हि तच्छ्रोत्रेण गानभोगो लभ्यते। विषयभोगाङ्गीकारे दुष्टस्यापि भोगः स्यादित्यत उत्तरवाक्यगतं विशेषणमाश्रित्याह॥ गुणेति॥ गुण-[1] मेवेत्यर्थः। एतद्भुञ्जानस्य विशेषणमिति केचित्। तान् प्रत्याह॥ न ह वा इति॥९॥

भ० गी०—

उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम्।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः॥१०॥

भा०—

तर्हि किमिति न दृश्यत इत्यत आह॥ उत्क्रामन्त-मित्यादिना॥१०॥

प्र० दी०—

उक्तमेव किमित्युच्यत इति मन्दाशङ्कानिरासार्थमुत्तरश्लोकद्वयस्य सङ्गतिमाह॥ तर्हीति॥ यदि जीवातिरिक्तो देहे नियामकः स्यादिति शेषः। उक्तानुवादेन विमूढत्वमनुपलम्भे कारणम्, न तदभाव इत्युच्यत इति भावः॥१०॥

भ० गी०—

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्।
यतन्तोऽप्यकृतात्मानो नैनं[2] पश्यन्त्यचेतसः॥११

भा०—

यतन्तो ज्ञानं प्राप्य। अकृतात्मानोऽशुद्धबुद्धयः॥११॥

---

1. क. शुभं  2. अ. नैव

प्र० दी०—

"यतन्तो योगिनश्च" इति कारणान्तरमुच्यत इति प्रतीति-निराकरणार्थमाह ॥ यतन्त इति ॥ आत्मा जीवश्चेत् सर्वदा अकृत एव। शरीरं चेदसम्भव इत्यत आह ॥ अकृतेति ॥ आत्मा बुद्धिः। अकृतत्वं चाशुद्धत्वम्। "केशान् करोति" इत्यादौ शोधने[1]ऽपि करोतेः प्रयोगादिति भावः ॥ ११ ॥

भ० गी०—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२

भा०—

पूर्वोक्तमेव ज्ञानं प्रपञ्चयति ॥ यदादित्यगतमित्यादिना ॥ १२ ॥

प्र० दी०—

ननु "तद्भासयते" इत्यादिना स्वरूपं कथितम्। तत्किमुत्तरेणेत्यत आह ॥ पूर्वोक्तमेवेति ॥ "अधश्च मूलान्यनुसन्ततानि" इति यत्सर्वान्तर्यामिस्वरूपं विज्ञानमुक्तम्, यच्चोर्ध्वशब्देन सर्वोत्तमत्वं तदध्यायशेषेण प्रपञ्चयतीत्यर्थः ॥ १२ ॥

भ० गी०—

गामाविश्य च भूतानि धारयाम्यहमोजसा।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥१४॥

---

1. क. शोधके

भा०—

गां भूमिम् ॥ १३ ॥ १४ ॥

प्र० दी०—

धेनोः आवेशेन भूतधारणे किं कारणमित्यत आह ॥ गामिति ॥ १३ ॥ १४ ॥

भ० गी०—

सर्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥

भा०—

वेदनिर्णयात्मिका मीमांसा वेदान्ताः । तथा च[1] सामवेदे प्राचीनशालाश्रुतिः[2]—

"स वेदान्तकृत् स कालक इति स
ह्येव युक्तिसूत्रकृत् सालकः[3]" इति ॥ १५ ॥

प्र० दी०—

'वेदान्तकृत्' इत्युपनिषदां कर्तेत्यन्यथाप्रतीतिनिरासार्थमाह ॥ वेदेति ॥ वेदो वेदार्थः । तस्यान्तो निर्णयः । तदात्मिका । तादर्थ्यात् ताच्छब्द्यम् । मीमांसा ब्राह्मी । तस्याः कर्तेति शेषः । कुत एतदित्यत आह ॥ तथा चेति ॥ युक्तिसूत्रकृत् । वेदार्थनिर्णयार्थयुक्तिसूचकवाक्यकृत् । स कालक इति द्वितीयेन कलधातोः ज्ञानाद्यर्थतया प्रसिद्धत्वात् निगदव्याख्यानमेतदित्याचष्टे ॥ १५ ॥

---

1. अ. हि 2. अ. प्राचीनशालश्रुतिः 3. अ. स कालकः

भ० गी०—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥१७॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥१८॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २०

॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुराणपुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५॥

भा०—

क्षरभूतानि ब्रह्मादीनि । कूटस्था[1] प्रकृतिः । तथा च शार्कराक्षश्रुतिः—

"प्रजापतिप्रमुखाः सर्वजीवाः
क्षरोऽक्षरः पुरुषो वै प्रधानम् ।

---

1. अ. कूटस्थः

तदुक्तमं चान्यमुदाहरन्ति

जालाजालं मातरिश्वानमेकम्" ॥

इति ॥ १६-२० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीता-भाष्ये पञ्चदशोऽध्यायः ॥ १५ ॥

प्र० दी०—

क्षराक्षरशब्दौ जडजीवार्थावित्यपव्याख्याननिरासार्थमाह ॥ क्षरेति ॥ भूतग्रहणं युक्तिसूचनार्थम् । न हि जडमात्रे भूतशब्दो रूढः । किं तु जीवेष्वपि । पुरुषशब्दस्य चैतदुपलक्षणम् । प्रकृतिश्चेतना । "अक्षर" इति वक्तव्ये 'कूटस्थ' इति वचनमपि युक्तिसूचनार्थमेव । न हि जीवानां कूटस्थत्वमस्ति । सुखादिमत्त्वेन विकारित्वात् । श्रुति-संमत्या चायमेवार्थ इत्याह ॥ तथा चेति ॥ 'क्षर' इत्यनुवादेन 'प्रजापति' इत्यादि व्याख्यानम् । अन्यं परमात्मानम् । क्षरान्त-र्भूतोऽपि मातारिश्वा विवक्षाविशेषेणाक्षरोऽपि भवतीत्युच्यते ॥ जालेति ॥ जालं संसारबन्धः । सोऽस्यास्तीति जालः । अर्श आदिभ्यो अच् । तद्रहितश्चाजालः । अभिमानाभावात् ॥ १६-२० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां पञ्चदशोऽध्यायः समाप्तः ॥ १५ ॥

---

## ॥ अथ षोडशोऽध्यायः ॥

भ० गी०—

श्रीभगवानुवाच—

अभयं सत्त्वसंशुद्धिः ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१॥

भा०—

॥हरिः ॐ॥ पुमर्थसाधनविरोधीन्यनेनाध्यायेन दर्शयति । तपो ब्रह्मचर्यादि । "ब्रह्मचर्यादिकं तपः" इत्यभिधानम्[1] ॥ १ ॥

प्र० दी०—

॥ हरिः ॐ ॥ अध्यायप्रतिपाद्यं दर्शयति ॥ पुमर्थेति ॥ यद्यपि पूर्वयोरध्याययोः, साधनप्रतिपादन एव तात्पर्यम् । तथाऽपि तन्न प्रपञ्चितम् । किं नाम बन्धस्वरूपं साधनमनुतिष्ठता च तद्विरोधिनां त्यागोऽवश्यं करणीयः । पूर्वाध्याये च 'निर्मान' इत्यादिना पुमर्थयोर्ज्ञानमोक्षयोः साधनं, "यतन्तोऽप्यकृतात्मानः" इत्यादिना तद्विरोधि च सङ्क्षेपेणोक्तम् । तदुभयमिदानीं प्रपञ्चनीयम् । सुरासुरलक्षणं च तथेति तदनेनाध्यायेन दर्शयतीत्यर्थः । तपो वक्ष्यमाणमिति कश्चित् । तदसत् । "देवद्विज" इत्यादिनोक्तस्यात्र ग्रहणे शौचादेरपि तपोग्रहणेन गृहीतत्वात्पुनरुक्तिप्रसङ्गात् । अतो वक्ष्यमाणान्तर्गतं यदत्र पृथगुच्यते तद्व्यतिरिक्तमेव । तच्च प्रधानस्यैवोपलक्षणत्वोपपत्तेर्नोपवासादीति भावेन सप्रमाणकमाह ॥ तप इति ॥ १ ॥

भ० गी०—

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ॥ २ ॥

---

1. अ. इति हि

भा०—

पैशुनं परोपद्रवनिमित्तदोषाणां[1] राजादेः कथनम् ।

"परोपद्रवहेतूनां दोषाणां पैशुनं वचः ।
राजादेस्तु मदाद्भीतेरदृष्टिर्दर्प उच्यते ॥"

इत्यभिधानात्[2] । लौल्यं रागः । "रागो लौल्यं तथा रक्तिः" इत्यभिधानात् । अचापलं स्थैर्यम् । "चपलश्चञ्चलोऽस्थिरः" इत्यभिधानात् ॥ २ ॥

प्र० दी०—

पैशुनाभावो अपैशुनम् । पैशुनं च परस्यापराधवचनमित्यसत् । शिष्यादिदोषानुवादस्य शिक्षार्थस्यापि तत्त्वप्राप्तेरित्याशयेनाऽह ॥ पैशुनमिति ॥ राजादेः तच्छ्रावणम् । 'परोपद्रवनिमित्त' इति दोषेषूपचारः । अनेनं परोपद्रवायेति सूचयति । वचः कथनम् । मदात् कारणात् । भीतेरदृष्टिरनुत्पत्तिरिति यावत् । भीतेः भीतिकारणस्य, तथात्वेनादृष्टिरिति वा । बालादीनां भीतेरदर्शनं व्यावर्तयितुं 'मदात्' इत्युक्तम् । अनेन धात्वर्थोऽप्यनुगतः । एतेनासुरलक्षणं दर्पोऽपि व्याख्यातः । अलोलुत्वाचापलत्वयोर्भेदं क्रमेण सप्रमाणकं दर्शयति ॥ लौल्यमिति ॥ लोलुत्वपर्यायोऽयमित्यत एवमुक्तम् ॥ २ ॥

भ० गी०—

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥ ३ ॥**

**दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥ ४ ॥**

---

1. परोपद्रवनिमित्तानां   2. अ. इति हि अभिधानम्

दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥५
द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥७॥

भा०—

क्षमा तु क्रोधाभावेन सहापकर्तुरनपकारः[1]।

"अक्रोधोऽदोषकृच्छत्रोः क्षमावान् स निगद्यते"

इत्यभिधानात्। दैवीं सम्पदं अभिजातः प्रतिजातः ॥ ३-७ ॥

प्र० दी० —

'अक्रोध' इत्युक्तत्वात् 'क्षमा' इति पुनरुक्तिरित्यत आह ॥ क्षमा त्विति ॥ क्रोधं दोषमपकारं च न करोति अक्रोधदोषकृत्। शत्रोरपकर्तुः। "सम्पदं अभिजातोऽसि" इत्यत्र अभिजात उत्तमजन्मा। नायं धातुः सकर्मकः। तत्कथं द्वितीयेत्याशङ्क्य "अभिलक्ष्य जात" इति केचिद्व्याचक्षते। तदसत्। अर्जुनस्य देवत्वेन देवत्वमुद्दिश्य जन्मायोगादित्याशयवानाह ॥ दैवीमिति ॥ अनेनैतद्व्याचष्टे। नायं अभिरुपसर्गः। येन तस्य जनिसम्बन्धे द्वितीयाऽनुपपत्तिः, लक्षिसम्बन्धे चोक्तानुपपत्तिः स्यात्। किं तु प्रत्यर्थे लक्षणे कर्मप्रवचनीयः। तथा च कर्मप्रवचनीययुक्ते द्वितीयोपपद्यते। यथा वृक्षमभि वृक्षं प्रति विद्योतत इत्यत्र वृक्षो विद्योतनत्य लक्षणमित्यर्थः सम्पद्यते। तथा चार्जुनस्य प्राप्तदेवत्वविरोध इति। अत एव "सम्पदं दैवीं अभिजातस्य" "अभिजातस्य पार्थ सम्पदमासुरीं", इत्येतद्विहायेदं व्याख्यातम्। अर्जुनस्य देवत्वप्रसिद्धेः। एतत्साहचर्यात्तत्राप्येतदर्थत्वोपपत्तेः ॥३-७॥

1. अ. अनपकृतिः

भ० गी०—

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ॥ ८ ॥
एतां दृष्टिमवष्टभ्य नष्टाऽत्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥

भा०—

जगतः सत्यं प्रतिष्ठा ईश्वरश्च विष्णुः । तद्वैपरीत्येनाऽहुः । "तस्योपनिषत् सत्यस्य सत्यमिति । प्राणा वै सत्यम्, तेषामेष सत्यं" इति हि श्रुतिः ।

"द्वे वा व ब्रह्मणो रूपे मूर्तं चामूर्तं च
स्थितं च यच्च सच्च त्यच्चेति[1] ।
तस्योपनिषत्सत्यस्य सत्यमिति, एष ह्येव
एतत् सादयति यामयति चेति" ॥

इति प्राचीनशालाश्रुतिः । परस्परसम्भवो ह्युक्तः "अन्नाद्भवन्ति भूतानि[2]" इत्यादिना ॥ ८-९ ॥

प्र० दी०—

न केवलं जगतो मिथ्यात्वादि वदतामसुरत्वं "असत्यमप्रतिष्ठं ते" इत्यनेनोच्यते । किं तु जगज्जन्मादिकारणं विष्णुं ये न मन्यन्ते तेषां सर्वेषामपीति भावेनाह ॥ जगत इति ॥ तद्वैपरीत्येनेति ॥ न विद्यते सत्यं अस्येत्यादि । जगतः सत्यं विष्णुरित्यत्र श्रुतिमाह ॥ तस्येति ॥ तस्य विष्णोः सत्यस्य सत्यमित्युपनिषद्रहस्यं नाम । कथम्? प्राणाः मूर्तामूर्तं, जगदिति यावत्, सत्यमित्युच्यते । तेषां प्राणानामेष विष्णुः सत्यमित्यर्थः । एवं चेज्जगतो मुख्यं सत्यत्वं न भवेत् । अन्यथा निर्धारणायोगादित्यतो मूर्तामूर्तात्मकस्य जगतः सत्यत्वं ताव-

1. अ. त्यं च इति च  2. अ. "भवन्ति" इति न पाठः

दन्यथा श्रुत्यैव व्याचष्टे ॥ द्वे वावेति ॥ रूपे प्रतिमे । तत्र मूर्तं 'स्थितं' इति 'सत्' इति चोच्यते । अमूर्तं तु 'यत्' इति 'तत्' इति चोच्यत इत्यर्थः । तथा च सच्च त्यच्च सत्यमित्युक्तं भवति । इदानीं जगतः सत्यत्वं विष्णोः श्रुत्या व्याचष्टे ॥ तस्येति ॥ सादयति विशरणादिकं प्रापयतीति सत् । यामयति नियच्छतीति यम् । सच्च तत् यं च सत्यमित्यर्थः । प्रतिष्ठा ईश्वरश्चेति प्रसिद्धमेव । अपरस्परसम्भूतमित्यस्य अपरं परस्मात् सम्भूतमिति व्याख्यानमसत् । प्रतिषेधप्रकरणात् । अतः परस्परसम्भूतं न भवतीत्याहुरित्येव व्याख्येयम् । स्यादेवं, यदि परस्परसम्भवो भगवतोऽभिमतः स्यादित्यत आह ॥ परस्परेति ॥ यद्वाऽनेन परव्याख्यानासाधुत्वमुपपादयति । भगवता परस्परसम्भवस्योक्तत्वात्तद्वचनं कथमासुरमिति । ईश्वराक्षेपे तात्पर्यमिति चेन्न । पुनरुक्तिप्रसङ्गात् ॥ ८-९ ॥

भ० गी०—

> कामसाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
> मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥१०
> चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
> कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥
> आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
> ईहन्ते कामभोगार्थं अन्यायेनार्थसञ्चयान् ॥१२॥
> इदमद्य मया लब्धं इमं प्राप्स्ये मनोरथम् ।
> इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥
> असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
> ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥१४

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति
सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥१५

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥

आत्मसम्भाविताः स्तब्धाः धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

भा०—

दुष्पूरो हि कामः ।

"पाताल इव दुष्पूरो मां हि क्लेशयते[1] सदा"

इति हि मोक्षधर्मे ॥ १०-१७ ॥

प्र० दी०—

"काममाश्रित्य दुष्पूरं" इति कामस्य दुष्पूरत्वं किं विशेषणम् ? नेति ब्रूमः । किं तर्हि ? कामस्य प्रवृत्तिहेतुत्वे हेतुरभयमुच्यत इति भावेनाह ॥ दुष्पूरो हीति ॥ विशेषणमेव किं न स्यात् । कामस्य दुष्पूरत्वाव्यभिचारादिति भावेनाह ॥ पाताल इवेति ॥ १०-१७ ॥

भ० गी०—

अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥

---

1. अ. क्लेशयसे

*

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥२०

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत् ॥२१

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥२२॥

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥२४॥

॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसंपत्तियोगो नाम षोडशोऽध्यायः ॥ १६ ॥

भा० —

मामात्मपरदेहेष्विति ॥ न कस्यचित् विष्णुः कारयिता । यदि स्यान्मामपीदानीं कारयतु इत्यादि ।

"ईश्वरो यदि सर्वस्य कारकः कारयीत माम् ।
अधेति वादिनं ब्रूयात् सदाऽधो यास्यसीति तु" ॥

इति सामवेदे यास्कश्रुतिः ॥ १८-२४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये षोडशोऽध्यायः ॥ १६ ॥

प्र० दी०—

भगवद्द्वेषस्याऽऽत्मपरदेहाधिकरणत्वं कथमित्यत आह ॥ मामिति ॥ कुतो न। कारयिता यदि स्यात्तर्हीदानीमकुर्वाणं मामपि कारयतु। कुर्वाणं च निवारयत्वित्यर्थः। सदाऽधो नित्यनरकम् ॥ १८-२४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां षोडशोऽध्यायः समाप्तः ॥ १६ ॥

---

## ॥ अथ सप्तदशोऽध्यायः ॥

भ० गी०—

हरिः ॐ॥ अर्जुन उवाच—

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

भा०—

हरिः ॐ ॥ गुणभेदान् प्रपञ्चयत्यनेनाध्यायेन। शास्त्रविधिमुत्सृज्य अज्ञात्वा[1] ।

"वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना"

इति विधिः उत्सृष्टो हि तैः ।

"ये वै वेदं न पठन्ते न चार्थं
वेदोज्झान् तान् विद्धि सानूनबुद्धीन्"

इति माधुच्छन्दसश्रुतिः। अन्यथा तामसा इत्येवोच्येत। न तु विभज्य। यदि सात्त्विकास्तर्हि नोत्सृष्टशास्त्राः। न हि वेदविरुद्धो धर्मः ।

"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदां[2]"

इति हि स्मृतिः ।

"वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः"

इति च भागवते ॥ १ ॥

प्र० दी०—

अध्यायार्थमाह ॥ गुणेति ॥ गुणनिमित्ताः श्रद्धादीनां भेदाः। "नान्यं गुणेभ्यः कर्तारं" इत्युक्तत्वात् प्रपञ्चयतीत्युक्तम्। सात्त्विकानां पुमर्थसाधनत्वादनुष्ठेयत्वम्। अन्येषां तद्विरुद्धत्वात् त्याज्यत्वं च

1. अ. अज्ञात्वैव 2. अ. "वेदो धर्ममूलं तद्विदां च स्मृतिशीले"

ज्ञापयितुमिति शेषः[1]। "शास्त्रविधिमुत्सृज्य" इत्यस्य वेदविधानमप्रामाण्यबुद्ध्या परित्यज्येत्यर्थप्रतीतिं निवारयितुमाह ॥ शास्त्रेति ॥ अज्ञानमेवात्रोत्सर्गः, न त्वप्रामाण्यबुद्ध्या त्याग इत्यर्थः। ननु प्राप्तपरित्याग उत्सर्गः। एवं च प्रतीतार्थ एव युक्तः। न तु 'ज्ञात्वा' इति। तत्राह ॥ वेद इति ॥ अर्थज्ञानपर्यन्तोऽयं विधिः। अयं च सर्वान् द्विजन्मनः प्राप्तः, तैरज्ञानिभिरुत्सृष्टश्च। अतो 'अज्ञात्वा' इति युक्तमित्यर्थः। अत्र श्रुतिसंमतिं चाह ॥ य इति ॥ न चार्थमधिगच्छन्ति। सहानूनया वेदतदर्थाधिगतियोग्यया बुद्ध्या वर्तमानान्। सानूनबुद्धयोऽपि ये वेदं न पठन्त इति योज्यम्। अप्रामाण्यबुद्ध्या परित्यज्य इत्येवार्थः किं न स्यादित्यत आह ॥ अन्यथेति ॥ यद्यत्र वेदविरोधिनां बौद्धादीनां निष्ठा पृच्छयेत तदा ते तामसाः इत्येवोत्तरमुच्येत। तदीयतामसत्वस्याविकल्पितत्वादिति भावः। न केवलं वक्तव्यानुक्तिरेव दोषः। किं तु तद्विरुद्धोक्तिश्च स्यादिति भावेनाऽऽह ॥ न त्विति ॥ "त्रिविधा भवति श्रद्धा" इत्यादिना श्रद्धां विभज्योत्तरं नोच्येतेत्यर्थः। एवमुत्तरवचनेऽपि किं स्यादिति चेत्, वेदाप्रामाण्यवादिनामपि पाक्षिकं सात्त्विकत्वं स्यात्। तथा च वक्ष्यामः। तदपि स्यादिति चेन्न। सात्त्विकत्ववेदविरोधित्वयोः सहानवस्थानादित्याह ॥ यदीति ॥ सहानवस्थानमपि कुतो निश्चेयमिति चेत्। सात्त्विका हि धर्ममाचरन्ति। "सत्त्वात् धर्मो भवेत् पुंसां" इति वचनात्। तथा च वेदविरोधिनो धर्मिणश्च इत्युक्तं भवति। एवं च वेदविरोधी धर्मं इत्याद्यापद्यते। तच्चानुपपन्नमित्याह ॥ न हीति ॥ कुतो नेत्यत आह ॥ वेद इति ॥ १ ॥

भ० गी०—

श्रीभगवानुवाच—

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥२॥**

---

1. क. ख. भावः

भा०—

अतो विभज्याऽऽह ॥ त्रिविधा इत्यादिना ॥ २ ॥

प्र० दी०—

ननु "तेषां निष्ठा का" इति पृष्टे सात्त्विकत्वादिकं वक्तव्यम् । "त्रिविधा" इत्यादिकं किमर्थमुच्यत इत्यत आह ॥ अत इति ॥ यत एवं अर्जुनेन वेदविधिमजानतां निष्ठा पृष्टा । अज्ञानं च भेदकं; त्रयाणामपि सम्भवात् । न चाज्ञानस्य प्रभेदाः सन्ति । अतः "श्रद्धयान्विताः" इति तद्विशेषणत्वेनोक्तां श्रद्धां सात्त्विकत्वादिना विभज्य तदाश्रयेण तेषां स्वरूपमाहेत्यर्थः ॥ २ ॥

भ० गी०—

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥३॥

भा०—

सत्वानुरूपा चित्तानुरूपा । यो यच्छ्रद्धः स एव सः, सात्त्विक श्रद्धः सात्त्विक इत्यादि ॥ ३ ॥

प्र० दी०—

सात्त्विकत्वादिभेदेन श्रद्धा त्रिविधा इत्युक्ता । पुनः "सत्त्वानुरूपा सर्वस्य श्रद्धा भवति" इति वचनं कथं न व्याहतमित्यत आह ॥ सत्त्वेति ॥ चित्तं चैतन्यम् । जीव इति यावत् । ननु श्रद्धास्वरूपमेव निरूपितम् । न तु तदाश्रित्य जीवस्वरूपं, अतो नासङ्गतमुत्तरमित्यतो येन तदुच्यते तत्पठित्वा व्याचष्टे ॥ य इति ॥ इत्यादि ज्ञातव्यमिति शेषः । राजसश्रद्धो राजसः । तामसश्रद्धस्तामस इत्यर्थः ॥ ३ ॥

भ० गी०—

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥४॥

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥

भा०—

कः सात्त्विकश्रद्ध इत्यादि विभज्याऽह ॥ यजन्त इत्यादिना ॥ ४ ॥ ५ ॥

प्र० दी०—

"तां शृणु" इति प्रतिज्ञातं नोच्यते । "यजन्ते सात्त्विका" इत्यादिकमप्रस्तुतं चोच्यत इत्यत आह ॥ क इति ॥ इत्यादि जिज्ञासायमिति शेषः । विभज्य श्रद्धास्वरूपं प्रतिज्ञातं श्रद्धात्रैविध्यमेवोच्यते । अतो नासङ्गतिरिति भावः । एतेन "सात्त्विकाः" इत्यादेः 'सात्त्विकश्रद्धाः' इत्यादिरर्थं उक्तो भवति ॥ ४ ॥ ५ ॥

भ० गी०—

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तः शरीरस्थं तान् विद्ध्यासुर-
निश्चयान् ॥ ६ ॥

भा०—

भगवत्कर्शनं नामाल्पदृष्टिरेव ।

"यो वै महान्तं परमं पुमांसं नैवं
द्रष्टा कर्शकः सोऽतिपापी"

इत्यनभिम्लानश्रुतिः । आसुरो निश्चयो येषां ते आसुरनिश्चयाः ।

"देवास्तु सात्त्विकाः प्रोक्ता दैत्याः राजसतामसाः"

इत्याग्निवेश्यश्रुतिः ॥ ६ ॥

प्र० दी०—

ननु निर्विकारस्य भगवतः कथं "मां चैवान्तः शरीरस्थं कर्शयन्ते" इति कर्शनमुच्यत इत्यत आह ॥ भगवदिति ॥ "प्रातिपदिकात्

धात्वर्थे बहुलं" इति वचनात् दृष्टिरपि णेरर्थ इति भावः। "मां चैव जीवरूपेणान्तः शरीरस्थं" इति व्याख्यानं तु सम्यग्व्याख्यानेनैव परास्तम्। जीवरूपत्वदर्शनस्यैव कृशीकरणत्वात्। "मदनुशासना-करणमेव मत्कर्शनं" इति व्याख्याननिरासार्थं 'एव' इत्युक्तम्। अशाब्दत्वात्। उक्तव्याख्याने श्रुतिसंमतिं चाऽऽह॥ य इति॥ नैवं, महत्त्वविरुद्धम्। 'द्रष्टा' इति तृन्नन्तम्। कर्शकः तस्योच्यत इति शेषः। कर्मधारयत्वशङ्कानिरासार्थमाह॥ आसुर इति॥ निश्चयः श्रद्धा। कर्मधारयपक्षे हि सामानाधिकरण्यं गौणमिति कल्प्यम्। मत्वर्थीयप्रत्ययो वा। तथा च गौरवमिति भावः। ननु प्रकरणात् तामसनिश्चयानिति वक्तव्यम्। 'आसुरनिश्चयान्' इति कथमुक्तमित्यत आह॥ देवास्त्विति॥ सात्त्विका देवाः देवपर्यायवाच्याः प्रोक्ताः। राजसा तामसाश्च दैत्या दैत्यपर्यायवाच्याः प्रोक्ता इत्यर्थः॥ ६॥

भ० गी०—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु॥ ७॥

आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः
सात्त्विकप्रियाः॥ ८॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः॥ ९॥

यातयामं गतरसं पूति पर्युषितं च यत्।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्॥१०॥

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥११॥
अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥
विधिहीनमसृष्टान्नं मंत्रहीनमदक्षिणम्।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१५॥

भा०—

प्रीतिः अनन्तरिका। हृद्यत्वं दर्शने। स्थिराश्च न तदैव पक्वा[1] भवन्ति। तथा ह्याज्यादयः ॥ ७-१५ ॥

प्र० दी०—

"प्रीतिविवर्द्धनाः", "हृद्याः" इत्येतयोरर्थभेदमाह ॥ प्रीतिरिति ॥ आनन्तरिकेति ॥ ठन्[2]प्रत्ययान्तम्। सेवाव्यवहितकाल इत्यर्थः। "प्रियं तत्कालसौख्यमिदं" इति वचनात्। दर्शनेऽनुभवे सति पश्चादपि यन्मनोहारित्वं तत् हृद्यत्वम्। "हृद्यं पश्चात् मनोहारि" इति वचनादित्यर्थः। आहाराणां क्षणिकानामभावात् कथं 'स्थिरा' इति विशेषणमित्यत आह ॥ ॥ स्थिराश्चेति ॥ चस्त्वर्थः प्रसिद्धं स्थैर्यं व्यावर्तयति। तदैव अचिरकाल एव। पक्वाः निर्वृत्त[3]पाकाः चिरकालं देहे गुणप्रदा इत्यर्थः। असम्भवपरिहाराय तानुदाहरति॥ तथा हीति ॥ ७-२५ ॥

---

1. अ. पक्ताः	2. क. ख. ठक्प्रत्ययान्तम्	3. निवृत्तपाकाः

भ० गी०—

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१७॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

मूढग्राहेणाऽत्मनो यत् पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥२०

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

भा०—

सौम्यत्वं अक्रौर्यम् । "अक्रूरः सौम्य उच्यते" इत्यभि-[1] धानम् । मौनं मननशीलत्वम् ।

"बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः"

इति हि श्रुतिः ।

---

1. अ. इति हि

"एतेन हीदं सर्वं मतं, यदनेन हीदं सर्वं मतं तस्मान्मुनिस्तस्मान्मुनिरित्याचक्षते" इति[1] भाल्लवेयश्रुतिः। कथं चान्यथा मानसं तपः स्यात् ॥ १६-२२ ॥

प्र० दी०—

नन्वङ्गसौष्ठवं सौम्यत्वम्। तत्कथं मानसं तप उच्यत इत्यत आह ॥ सौम्यत्वं इति ॥ मौनं वाङ्नियमनमित्यन्यथाप्रतीतिनिरासार्थमाह ॥ मौनमिति ॥ कुत एतदित्यत आह ॥ बाल्यमिति ॥ युक्तिबलोपेतत्वं बाल्यम्। आगमज्ञत्वं पाण्डित्यम्। अथ मुनिः मननशीलो भवतीत्यर्थः। "एतेन हीदं" इत्युक्तमर्थं "यदनेन" इति हेतुत्वेनोपादत्ते। यस्मादेवं मुनिस्तस्मात्तं मुनिरित्याचक्षते। 'मन ज्ञाने' इत्यतः इकारप्रत्ययः। उपधाया उकारश्च। मुनेः भावश्च मौनम्। तच्च मननशीलत्वाख्यमागमार्थस्य युक्तिभिरनुसन्धानम्। उक्तार्थानङ्गीकारे बाधकमाह ॥ कथमिति ॥ मौनमिति शेषः। वाङ्नियम एव न मौनम्। किन्त्वत्र तत्कारणमनोनियमो लक्ष्यत इति कश्चित्। तदसत्। 'आत्मविनिग्रहः' इति पुनरुक्तिदोषात्। कथञ्चित् तत्परिहारेऽपि मुख्यार्थसम्भवे लक्षणाश्रयणस्यैव दोषत्वात् ॥ १६-२२ ॥

भ० गी०—

ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥२४॥

भा०—

पुनश्च कर्मादीतिकर्तव्यताविधानार्थमर्थवादमाह ॥ ॐ तत् सत् इत्यादिना ॥ परस्य ब्रह्मणो ह्येतानि नामानि।

---

1. अ. इति हि

"ओतं जगत् यत्र स्वयं च पूर्णो
वेदोक्तरूपोऽनुपचारतश्च।
सर्वैः शुभैश्चाभियुतो न चान्यैः
ॐ तत् सत् इत्येतमतो वदन्ति"॥

इति हि ऋग्वेदखिलेषु। द्वितीयपादः तच्छब्दार्थः। "सदेव सोम्य इदमग्र आसीत्" इति च। "ॐ इति ब्रह्म" इति च। तेन ब्रह्मणा। आत्मपूजार्थं वेदविधिः व्यञ्जनम्। मा तूक्ता पुरस्तात् ॥ २३ ॥ २४ ॥

प्र० दी०—

"ॐ" इत्यादिकं प्रकृतासङ्गतं कथमुच्यत इत्यत आह॥ पुनश्चेति॥ 'कर्म' इति यज्ञ उच्यते। आदिपदेन तपोदाने। इतिकर्तव्यता इत्थंभावः। विधानार्थं प्रतिपादनार्थम्। "अफलाकाङ्क्षिभिः" इत्यादिनोक्तत्वात् "पुनश्च" इत्युक्तम्। यज्ञतपोदानानां सात्त्विकत्वादिहेतवो असाधारणा धर्माः प्रागुक्ताः। साधारणांस्तु वक्तुं पुराकल्पादिरूपमर्थवादमाहेत्यर्थः। ब्रह्मशब्दस्य हिरण्यगर्भाद्यर्थतां निर्देशशब्दस्य च भावार्थतां वारयितुं व्याख्याति॥ परस्येति॥ निर्दिश्यतेऽनेनेति निर्देशो नाम। कुत एतदित्यतो 'हि' इत्युक्तम्। भावार्थत्वे 'ॐ तत् सत्' इत्येतैः सामानाधिकरण्यानुपपत्तेः नामार्थत्वमेवाङ्गीकार्यम्। 'ॐ' आदिकं च परब्रह्मनामत्वेन प्रसिद्धमित्यर्थः। तामेव प्रसिद्धिं दर्शयति॥ ओतमिति॥ ओतं प्रविष्टम् आश्रितं यत्र, परमेश्वरे यः स्वयं च जगति ओतः प्रविष्टः। पूर्णोऽनुपचारतः, मुख्यया वृत्त्या। अत्र "ओतं जगत् यत्र" इत्यादिना ॐशब्दस्य निमित्तद्वयेन भगवति वृत्तिर्दर्शिता। "अवतेः टिलोपश्च" इति वचनात्। "सर्वैः" इत्यनेन सच्छब्दस्य। "साधुभावे च" इति वक्ष्यमाणत्वात्। तच्छब्दस्य तु न केनापि। अतः "ॐ तत् सत् इत्येतं" इत्ययुक्तमित्यत आह॥ द्वितीयेति॥ 'वेदोक्त' इति द्वितीयपादः तच्छब्दार्थव्याख्यानपरः। 'तत्' इति

हि नित्यपरोक्षत्वमुच्यते। न चेश्वरस्वरूपमनुमातुं शक्यम्। अतो वेदैकवेद्यत्वात् 'तत्' इत्युच्यत इति भावः। सदोंशब्दयोः परब्रह्मनामत्वे श्रुत्यन्तरं चाह ॥ सदेवेति॥ 'तेन' इति निर्देशपरामर्श इति कश्चित्। तदसदिति भावेनाऽऽह॥ तेनेति॥ कुत एतत्? निर्देशस्य ब्राह्मणादिविधानायोगात्। निर्देशस्तुत्यर्थमिदमुच्यत इति चेन्न। भूतोक्तिसम्भवेन तदयोगात्। ब्रह्मणाऽपि ब्राह्मणादिविधानानुपपत्तिः, प्रयोजनाभावादित्यत आह॥ आत्मेति॥ आत्मपूजया प्राणिनां सुखार्थं ब्राह्मणादयो विहिता इति सम्बन्धः। ब्राह्मणादिवत् वेदानामपि विधानं निर्माणमेवेति प्रतीतिनिरासार्थमाह॥ वेदेति॥ व्यञ्जनमेव विधानं, न निर्माणमित्यर्थः। सकृच्छ्रुतस्य विहितशब्दस्य द्विधा अर्थकल्पनं कुत इति चेत्, वेदापौरुषेयत्वस्य प्रमितत्वात्। किं तत्प्रमाणमित्यत आह॥ मा त्विति॥ परमेश्वरस्य वेदव्यञ्जनं नाध्यापकवत्। किं तु स्वातन्त्र्यमप्यस्तीति ज्ञापयितुं विधिग्रहणं कृतम्। वेदो हि विध्यात्मा अस्ति। 'विधिः', 'प्रेरणं', 'नियोगः' इति चानर्थान्तरम्। न च नियोक्तारमन्तरेण नियोगः सम्भवति। न च शब्दादीनां नियोक्तृत्वं सम्भवति लोकविरोधात्। न चोच्चारक एव नियोक्ता "मां उपासीत" इत्यादावव्यवस्थापातात्। तस्मात् स्वतन्त्रेण वक्त्रा भाव्यम्। न चैवं पौरुषेयत्वापत्तिः। अनादिसिद्धेनैव शब्दार्थसम्बन्धेन तस्य नियोक्तृत्वाभ्युपगमादिति॥ २३-२४॥

**भ० गी०—**

तदित्यनभिसन्धाय फलं यज्ञतपःक्रिया।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः
॥ २५ ॥

**भा०—**

तत्फलं मे स्यादित्यनभिसन्धाय॥ २५॥

**प्र० दी०—**

"तदित्यनभिसन्धाय" इति वाक्यं ब्रह्मणीव यज्ञादावपि तच्छब्द-

प्रवृत्तिं प्रतिपादयतीति ज्ञापयितुं योजयति ॥ तदिति ॥ वेदोक्तं स्वर्गादिकम् ॥ २५ ॥

भ० गी०—

सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥२६

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥२८॥

॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे त्रिगुणविभागो नाम सप्तदशोऽध्यायः ॥ १७ ॥

भा०—

सद्भावशब्देन प्रजननं सूचितम् । ॐ इत्युक्त्वा, अनभिसन्धाय फलं, यज्ञदानतपआदिकृतां अतिप्रीतेः नामसाम्यात् ब्रह्मैव निष्पादितं भवतीत्याशयः । तथा च ऋग्वेदखिलेषु—

"ॐ यज्ञाद्या निष्फलं कर्म तत् स्यात् सत्
वै तदर्थं कर्मेति वदन्ति देवाः ।
तच्छब्दानां सन्निधेर्ब्रह्मप्रीतेः
तद्रूपत्वाज्जनितं ब्रह्म तस्य" ॥

इति ॥ २६-२८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

प्र० दी०—

सद्भावे सत्तायामिति प्रतीतिनिरासार्थमाह ॥ सद्भावेति ॥ प्रजननं प्रागसतः सत्ताऽपादनम् । यद्यपि सद्भावशब्दः सत्तामात्रवाची ।

तथाऽप्यत्र ब्रह्मणो जगज्जनकत्वस्य विवक्षितत्वात् सत्ताविशेषप्रजननपर इति ज्ञायत इति प्रतिपादयितुं "सूचितं" इत्युक्तम्। नन्वनेन यज्ञादीनां का इतिकर्तव्यता प्रतिपादिता भवतीत्यत आह ॥ ॐ इति ॥ उक्तोङ्कारार्थज्ञानपूर्वकमनभिसन्धाय फलं ब्रह्माभिसन्धाय च ब्रह्मज्ञानभक्तिपूर्वकं तद्विषयत्वेन निष्ठया वेदोक्तप्रकारेण ब्राह्मणैः सहेत्यपि ग्राह्यम्। आदिपदेन जपादिग्रहणम्। षष्ठी तृतीयार्थे। नामसाम्यात् नामसाम्येन अवगतात् तत्प्रतिमात्वात्। घटादीनामपि ब्रह्मप्रतिमात्वसाम्यात् को विशेषो यज्ञादेरित्यत उक्तम् ॥ अतिप्रीतेरिति ॥ ब्रह्मणः यज्ञादिषु निष्पादितं प्रतिष्ठापितम्। अत एवं क्रियमाणे यज्ञादिकं सात्त्विकं, अन्यद्राजसं तामसं वा इत्येवमितिकर्तव्यता प्रतिपादितेति वाक्य[1]शेषः। अत्र हि "ॐ तत् सत्" इत्यनेन ब्रह्मणो यन्नामत्रयं तद्यज्ञादेरपि वाचकमिति प्रतिपादितम्। तेन यज्ञादेः ब्रह्मप्रतिमात्वं सूचितम्। ब्राह्मणा इत्यादिना ॐकारं ब्रह्मणि यज्ञादौ च व्युत्पाद्य तदुच्चारणाचार उक्तः। तेनार्थस्मरणपूर्वकं ॐकारमुच्चार्य वेदोक्तप्रकारेण ब्राह्मणैः सह यज्ञादिकं कार्यमिति सूचितम्। 'तत्' इत्यनेन तच्छब्दो यज्ञादौ ब्रह्मणि च व्युत्पादितः। तेन फलमनभिसन्धाय ब्रह्माभिसन्धाय च इति लब्धम्। 'सद्भावे' इत्यनेन सच्छब्दो ब्रह्मणि व्याख्यातः। तेन ब्रह्मज्ञानपूर्वकमिति लभ्यते ॥ २३ ॥ "यज्ञे तपसि कर्म चैव" इत्यनेन यज्ञादिषु सच्छब्दो व्याख्यातः। तेन ब्रह्मविषयत्वेन निष्ठया चेति लब्धम् ॥ २७ ॥ "अश्रद्धया" इत्यनेन ब्रह्मभक्तिरपीति। अत्र श्रुतिसम्मतिमाह ॥ तथा चेति ॥ ॐ यज्ञाद्याः वेदाद्योतत्वात्। निष्फलं फलोद्देशरहितत्वात्। तदर्थं ब्रह्मविषयम्। एवं तच्छब्दानां ब्रह्मशब्दानां, यज्ञादिषु सन्निधेरवगततद्रूपत्वात् तत्प्रतिमात्वात्। तस्योक्तप्रकारेण यज्ञादीनामनुष्ठातुः ॥ २६-२८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां सप्तदशोऽध्यायः समाप्तः ॥ १७ ॥

---

1. क. आशयशेषः

## ॥ अथ अष्टादशोऽध्यायः ॥

भ० गी०—

अर्जुन उवाच—

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक् केशिनिषूदन ॥ १ ॥

भा०—

॥ हरिः ॐ ॥ पूर्वोक्तं साधनं सर्वं सङ्क्षिप्योपसंहरत्यनेनाध्यायेन ॥ १ ॥

प्र० दी०—

अध्यायप्रतिपाद्यमाह ॥ पूर्वोक्तमिति ॥ साधनं ज्ञानसाधनम् । उक्तस्योक्तिर्व्यर्थेत्याशङ्कानिरासाय सङ्क्षिप्योपसंहरतीत्युक्तम् । अनुक्तं त्रैगुण्यं च वक्तीत्यपि ग्राह्यम् ॥ १ ॥

भ० गी०—

श्रीभगवानुवाच—

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥

भा०—

फलानिच्छया अकरणेन वा काम्यकर्मणो न्यासः संन्यासः । त्यागस्तु फलत्याग एव । तथा हि प्राचीनशालश्रुतिः—

"अनिच्छयाऽकर्मणा वाऽपि काम्यकर्मन्यासो
न्यासः फलत्यागस्तु त्यागः"

इति ॥ २ ॥

प्र० दी०—

"काम्यानां कर्मणां" इत्येतं श्लोकं केचित् 'काम्यानां कर्मणां अश्वमेधादीनां स्वरूपेण त्यागः संन्यासः। नित्यनैमित्तिकादिसर्वकर्मफलत्यागः त्यागः' इति। तदसदिति भावेनाऽऽह॥ फलेति॥ वैकल्पिककाम्यानां स्वर्गादिफलानिच्छया विशेषणत्यागेन त्यागः नियतकाम्यानां स्वरूपाकरणेन त्यागः संन्यासः। काम्यकर्मणामेव फलत्यागस्तु त्यागः, करणाकरणे तु न विवक्षिते इत्यर्थः। कुत एतदित्यत आह॥ तथा हीति॥ अकर्मणा अकरणेन। जनकाश्वपत्यादिभिः मुमुक्षिभिः अश्वमेधादीनामनुद्दिष्टफलानामनुष्ठानान्न काम्यनां स्वरूपपरित्याग एव। नित्यनैमित्तिकफलस्यान्तःकरणशुद्धेः सर्वापेक्षितत्वेन तत्त्यागो न युक्तः॥ २॥

भ० गी०—

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे॥ ३॥

भा०—

मनीषिण इत्युक्तत्वात् पूर्वपक्षोऽपि ग्राह्य एव। फलत्यागेन त्यागो विवक्षितो यज्ञादेस्तत्पक्षे। "यस्तु कर्मफलत्यागी" इति च वक्ष्यते। अत एक एवायं पक्षः॥ ३॥

प्र० दी०—

"त्याज्यं दोषवत्" इत्यनेन हेयः कापिलानां पक्षः उपन्यस्तः इति केचित्। तदसदिति भावेनाऽऽह॥ मनीषिण इति॥ पूर्वपक्षः पूर्वोपन्यस्तः पक्षः। ननु यज्ञदानतपःकर्म न त्याज्यं, कार्यमेव तदिति भगवन्मतविरुद्धोऽसौ कथं ग्राह्य इत्यत आह॥ फलत्यागेनैवेति॥ फलत्यागाभिप्रायेण यज्ञादेः त्यागो विवक्षितः तत्पक्षे न स्वरूपतः। कुतः? 'मनीषिण' इति विशेषणादेव। अतो न भगवन्मतविरुद्धोऽसौ। कर्मत्यागशब्दः कथं फलत्यागेनार्थेनार्थवानित्यत आह॥ यस्त्विति॥ नन्वेवं सति पूर्वोत्तरार्धोपन्यस्तयोः पक्षयोरविरोध आपद्यत इति चेत्,

*

सत्यमित्याह ॥ अत इति ॥ अतो मनीषिपक्षत्वात् । एकोऽविरुद्धः । अयं पूर्वोत्तरार्धोपन्यस्तः । किन्त्वापातप्रतीतिमपेक्ष्य सन्देहबीजत्वेन विप्रतिपत्तिरियमुद्भावितेति भावः ॥ ३ ॥

भ० गी०—

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥४॥

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥

नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥

दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्यते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥१०॥

भा०—

तत्प्रकारं चाह ॥ **निश्चयमित्यादिना** ॥ यज्ञभेद उक्तः "द्रव्ययज्ञा" इत्यादिना। दाने त्वभयदानमन्तर्भवति। एतेषां मध्ये यत्किञ्चित् यज्ञादिकं कर्तव्यमेवेत्यर्थः। अन्यथा—

"ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा।
यदीच्छेत् मोक्षमास्थातुमुत्तमाश्रममाश्रयेत्॥"

इत्यादिव्यासस्मृतिविरोधः। ज्ञानयज्ञविद्याऽभयदानब्रह्मचर्यादितपसो हि ते। अतो यद्वचः अन्यथा प्रतीयते अधिकारभेदेन तद्योज्यम्। अन्यथा इतरेषां गत्यभावात्॥ ४-१०॥

प्र० दी०—

न केवलं 'मनीषिणः' इति विशेषणसामर्थ्यादेवमुच्यते। किं तु भगवताऽपि तदविरोधप्रकारस्य व्युत्पाद्यमानत्वादिति भावेनोत्तरवाक्यतात्पर्यमाह॥ तदिति॥ ननु परमहंसानां यज्ञदानयोरभावात्कथमुच्यते "न त्याज्यं कार्यमेव तत्" इति। तत्राऽह॥ यज्ञेति॥ ननु ज्योतिष्टोमादिकमेव यज्ञः, धनदानादिकमेव दानं गृहीत्वा पारमहंस्यमेव कुतो न निराक्रियत इत्यत आह॥ अन्यथेति॥ यतिः हंसादिः। आस्थातुं प्राप्तुम्। उत्तमाश्रमं पारमहंस्यम्। नन्वेतेषां मध्ये इत्येवं व्याख्यानेऽपि कथं परमहंसानां यज्ञादिसम्भव इत्यत आह॥ ज्ञानेति॥ बहुव्रीहित्रयगर्भः कर्मधारयोऽयम्। विद्याऽभयविषयं दानं येषां ते तथोक्तास्ते परमहंसाः। ननु पारमहंस्ये हि प्रवृत्तः प्रियव्रतो हिरण्यगर्भेण निवारित इति पुराणेषूच्यते। तत्कथं पारमहंस्यकर्तव्यतेत्यत आह॥ अत इति॥ उक्तवाक्यविरोधादेव। वाक्यत्वाविशेषात् पुराणवाक्येनैव स्मृतेर्बाधः किं न स्यादित्यत आह॥ अन्यथेति॥ एवमयोजने। इतरेषां "ब्रह्मचारी" इत्यादीनाम्। गत्यन्तराभावादप्रामाण्यमेव प्रसज्यत इति शेषः। एवं परमहंसानामपि यज्ञादिकर्तव्यतासम्पादनेनेदमपि परास्तं यत् केनचिदुक्तं

"अज्ञान् कर्मणि अधिकारिणोऽधिकृत्य एतत्प्रकरणं प्रवृत्तं न परमहंस-परिव्राजकान्" इति ॥ ४-१० ॥

**भ० गी०—**

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥११॥**

**भा०—**

अन्यः त्यागार्थो न युक्त इत्याह ॥ **न हीति** ॥ ११ ॥

**प्र० दी०—**

ननु "इति मे पार्थ" इति भगवता स्वसिद्धान्तो निष्टङ्कितः । अतो "न हि देहभृता" इति किमुच्यत इत्यत आह ॥ अन्य इति ॥ सर्वकर्मफलत्यागलक्षणः ॥ त्यागार्थः त्यागशब्दार्थः । पूर्वपक्षबीज-निरासार्थमिति शेषः ॥ ११ ॥

**भ० गी०—**

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां पुंसां[1] न तु संन्यासिनां क्वचित्**
**॥ १२ ॥**

**भा०—**

त्यागं स्तौति ॥ **अनिष्टमिति** ॥ १२ ॥

**प्र० दी०—**

कर्मफलाभावो नाम संसारनिवृत्तिरेव । सा कथं त्यागफलत्वे-नोच्यत इत्यत आह ॥ त्यागमिति ॥ उपपादितमेतत् 'त्यागाच्छान्तिः' इत्यत्र ॥ १२ ॥

---

1. अ. प्रेत्य

भ० गी०—

पञ्चैतानि महाबाहो कारणानि निबोध मे ।
साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम्
॥ १३ ॥

भा०—

पुनः संन्यासं प्रपञ्चयितुं कर्मकारणान्याह ।। पञ्चेत्यादि ।। साङ्ख्ये कृतान्ते ज्ञानसिद्धान्ते ।। १३ ।।

प्र० दी०—

'पञ्च' इत्यादेः प्रकृतेन सङ्गत्यप्रतीतेस्तामाह ॥ पुनरिति ।। न केवलं काम्यानां कर्मणां न्यासः संन्यासः; किं तु कर्तृत्वाभिमानत्यागश्चेत्येवं प्रागुक्तं संन्यासं पुनः प्रपञ्चयितुमात्मनोऽकर्तृत्वे क्रियाऽनिष्पत्तिप्रसङ्गात्, अङ्गीकार्ये कर्तृत्वे कथं तदभिमानत्यागो युक्त इत्याशङ्कापरिहारार्थमात्मव्यतिरिक्तान्येव कर्मकारणान्याहेत्यर्थः । साङ्ख्यशब्दः कपिलतन्त्रे रूढः । 'कृतं कर्म, तस्य अन्तो निवृत्तिर्यत्र उच्यते' इत्युपनिषत्सु कृतान्तशब्दं कश्चिद्व्याख्यातवान् । तदुभयं निवर्तयितुमाह ॥ साङ्ख्य इति ।। ज्ञानार्थः सिद्धान्तः ज्ञानसिद्धान्तः । 'सिद्धान्त' इति शास्त्रं लक्ष्यते । कापिलतन्त्रस्य निन्दितत्वात् । उपनिषत्स्वपि कर्मत्यागाप्रतिपादनात् ॥ १३ ॥

भ० गी०—

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥१४॥

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥१५॥

भा०—

अधिष्ठानं देहादिः। कर्ता विष्णुः; स हि सर्वकर्ता इत्युक्तम्। जीवस्य चाकर्तृत्वे प्रमाणमुक्तम्। करणमिन्द्रियादि च[1]। चेष्टाः क्रियाः। हस्तादिक्रियाभिः होमकर्माणि जायन्ते। ध्यानादेरपि मानसी चेष्टा कारणम्। पूर्वतनी चेष्टाऽपि संस्कारकारणत्वेन भवति। दैवमदृष्टम्। तथा चायास्यश्रुतिः—

"देहो ब्रह्मार्थेन्द्रियाद्याः[2] क्रियाश्च तथाऽदृष्टं
पञ्चमं कर्महेतुः"।

इति ॥ १४-१५ ॥

प्र० दी०—

अधिष्ठानादि करण एवान्तर्भूतमिति वक्ष्यति। तत्प्रतिबोधनायाधिष्ठानं निर्दिशति॥ अधिष्ठानमिति॥ आदिपदेन भूम्यादि। कर्ता जीव इति व्याख्यानमसदिति भावेनाह॥ कर्तेति॥ शरीरवाङ्मनोभिः क्रियमाणानां कर्मणां कर्ता कथं विष्णुरित्यत आह॥ स हीति॥ उक्तं, उपपादितम्। तथाऽपि जीवोऽत्र कर्ता किं न स्यादित्यत आह॥ जीवस्य चेति॥ अपराधीनत्वाभिप्रायेणेदं निराकरणम्। पराधीनं कर्तृत्वमङ्गीकृत्यान्यत्र जीवो व्याख्यात इत्यविरोधः। भावसाधनताप्रतीतिनिरासार्थमाह। करणमिति॥ आदिपदेन स्रुवादि। भावसाधनार्थस्य साध्यत्वात्। चेष्टाग्रहणेन च गृहीतत्वाच्च। वायवीयाः प्राणापानाद्याः चेष्टा इत्यसत्। द्रव्याभिधाने चेष्टात्वानुपपत्तेः। प्राणनाद्यभिधाने साध्यत्वात् कारकत्वानुपपत्तेरित्याशयवानाऽह॥ चेष्टा इति॥ क्रियाणां साधकत्वात्कथं कारकत्वमित्यत आह॥ हस्तादीति॥ सावान्तरव्यापारं हि कारणं कारकमुच्यते। तत्राधिष्ठानादिपदैर्व्यापारिणो निर्दिश्यन्ते। क्रियाशब्देन त्ववान्तरा व्यापाराः। कारकाश्रिताभिरवान्तरक्रियाभिः प्रधानक्रियाजननं च प्रसिद्धमेवेत्यर्थः। नन्वत्र कारकाभिधानप्रसङ्गे अधिष्ठाना-

---

1. अ. चशब्दो न श्रूयते 2. अ. ब्रह्मार्थेन्द्रियाद्याः

ध्येवोक्तम्। कर्मसम्प्रदानापादानानि कुतो नोक्तानि। अधिष्ठानादीनां सर्वक्रियानुगमात्। कर्मादीनां तदभावादिति ब्रूमः। तथा च वक्ष्यति "शरीरवाङ्मनोभिः यत्" इति। एवं तर्हि चेष्टाऽपि न वक्तव्या। ध्यानादिजनने कारणस्य मनसः चेष्टाभावेनाननुगमादित्यत आह॥ ध्यानादेरपीति॥ आदिपदेन स्मरणं गृह्यते। ज्ञात एवार्थे ध्यानं भवति। ज्ञानं चाऽत्मेन्द्रियसन्निकर्षेणैव मनसा जायते। संनिकर्षश्च मानसचेष्टाजन्यः। अतो ध्यानादेरपि मनस्सम्बन्धिनी चेष्टा कारणं भवतीति भावः। ननु नियतपूर्वक्षणे सत् कारणम्। न च ध्यानादिपूर्वक्षणे मनसि क्रियाऽस्ति। चिरातीतत्वात्। मनोनैश्चलसाध्यत्वात् ध्यानादेः। न च सन्निकर्षज्ञानद्वारा करणम्। तस्यापि चिरातीतत्वादित्यत आह॥ पूर्वतनीति॥ पूर्वतनी चिरातीताऽपि मानसी क्रिया सन्निकर्षद्वारा ध्यानादिहेतुसंस्कारकारणत्वेन भवति ध्यानादेः कारणम्। संस्कारस्य स्थायित्वादित्यर्थः। दैवमन्तर्यामिव्यापार इति कश्चित्। तदसत्। 'कर्ता' इत्यनेनैवोक्तत्वात्। चक्षुराद्यनुग्राहकाः सूर्यादय इत्यपरः। तदप्यसत्। करणादिशब्दैरेव गृहीतत्वादिति भावेनाऽह॥ दैवमदृष्टमिति॥ उक्तमर्थं श्रुतिसंमत्याऽपि समर्थयति॥ तथा चेति॥ 'देहः' उपलक्षणम्। हेतुः कारणम्। 'कर्म हेतु' इति क्वचित् पाठः। तत्र छान्दसो लिङ्गव्यत्ययः॥ १४-१५॥

भ० गी०—

तत्रैवं सति कर्तारमात्मानं केवलं तु यः।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः॥ १६॥

भा०—

केवलं निष्क्रियम्।

"एनं केवलमात्मानं निष्क्रियत्वाद्वदन्ति हि"

इति तत्रैव॥ १६॥

प्र० दी०—

न चैवं जीवस्य कर्मकारणेष्वनन्तर्भावे व्याख्यायमाने "तत्रैवं सति" इत्युत्तरवाक्ये, 'केवलं' इति न युज्यते। एकाकिनमात्मानं करणत्वेन मन्यमानस्य निन्दयाऽस्य ससहायस्य कारणत्वप्रतीतेरित्यत आह॥ केवलमिति॥ नात्र केवलशब्द एकाकिवचनः। किं तु निष्क्रियत्ववाची। तदुक्तिश्च निन्दोपपादनार्थैति भावः। केवल-शब्दस्य निष्क्रियार्थत्वं कुत इत्यत आह॥ एनमिति॥ तत्रैवायास्य-श्रुतावेवोक्तम्॥ १६॥

भ० गी०—

यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते।
हत्वाऽपि स इमान् लोकान्न हन्ति न
निबध्यते॥ १७॥

भा०—

तज्ज्ञानं स्तौति॥ यस्येति॥ यस्त्वीषद्बध्यते स ईषदह-ङ्कारी च॥ १७॥

प्र० दी०—

अवश्यं चैतदेवं, यावतोत्तरश्लोके स्वात्मानमकारणं जानतः स्तुतिः क्रियते। अन्यथा सहायस्य[1] कारणत्वं जानतः स्तुतिः क्रियेतेति भावेनाऽह॥ तदिति॥ स्वात्मनो निष्क्रियत्वज्ञानम्। ननु निरहङ्का-रस्यापीन्द्रादेः वृत्रवधादिनेषत् बन्धो दृश्यते। तत्कथमेतदित्यत आह॥ यस्त्विति॥ इयं च कल्पना वक्तुराप्तत्वादिना युज्यते॥ १७॥

भ० गी०—

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना।
करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः॥ १८॥

---

1. क. ख. ससहायस्य

 


भा०—

एवं तर्हि न पुरुषमपेक्ष्य विधिः ; अकर्तृत्वादित्यत आह ॥ **ज्ञानमिति** ॥ त्रिविधा कर्मचोदना, एतत् त्रिविधमपेक्ष्य कर्मविधिरिति 'त्रिविधा' इत्युच्यते । कारणानि सङ्क्षिप्याऽऽह ॥ **करणमिति** ॥ कर्मसङ्ग्रहः कर्मकारणसङ्ग्रहः[1] । अधिष्ठानादिः[2] । कारण[3] एवान्तर्भूतः[4] । तथा हि ऋग्वेदखिलेषु—

"ज्ञानं ज्ञेयं ज्ञानिनं चापेक्ष्य विधिरुत्थितः ।
करणं चैव कर्ता च कर्मकारणसङ्ग्रहः ॥"

इति । अकर्तृत्वेऽपि विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति । ईश्वराधीनत्वेऽपि विधिद्वारा नियतः तेनैव । यदि चेच्छादिर्जायते तर्हि कारितमेवेश्वरेण । फलं च नियतम् वस्तुतोऽकर्तृत्वेऽप्याभिमानिकं कर्तृत्वं तस्यैव । स्वातन्त्र्यं च जडमपेक्ष्यैवेति न प्रवृत्तिविधिवैयर्थ्यम् । सर्वं चैतदनुभवोक्तप्रमाणसिद्धमिति न पृथक् प्रमाणमुच्यते ॥ १८ ॥

प्र० दी०—

यदि न जीवस्य कारणत्वं कथं तर्हि तज्ज्ञानादेरुत्तरवाक्ये कर्मणां मूलकारणत्वमुच्यते 'ज्ञानादित्रयं कर्मणां प्रवर्तकमिति, इत्याशंक्य तस्यार्थान्तरं विवक्षुः, तन्निवर्त्यामाशङ्कामाह ॥ एवं तर्हीति ॥ यदि जीवो न कर्मणां कारणमित्यर्थः । विधिः श्रौतः स्मार्तश्च । न प्रवर्तेत, ततश्च तद्वैयर्थ्यप्रसङ्ग इति शेषः । 'एवं तर्हि' इत्युक्तस्यैव विवरणम् ॥ अकर्तृत्वादिति ॥ जीवस्य घटवदिति शेषः । ननु ज्ञानादिरूपेण कर्मचोदनायाः त्रैविध्यमयुक्तमनुपयुक्तं च कथमुच्यते । नियोक्तुः प्रेरणं हि विधिः । न च तज्ज्ञानादित्रयरूपम् । न चानेनोक्तशङ्कानिवृत्तिरित्यत आह ॥ त्रिविधेति ॥ स्पष्टप्रतीत्यर्थोऽनुवादः । इत्यत्रेति शेषः ।

---

1. अ. कर्मकारणसङ्क्षेपः
2. अ. अधिष्ठानादि
3. अ. करणे
4. अ. अन्तर्भूतम्

एतज्ज्ञानादिकम्। कर्मविधिः प्रवर्तते, जीवं प्रतीति शेषः। इतिशब्दो हेतौ। त्रिविधा इत्युच्यते कर्मचोदना। निमित्तनैमित्तिकभावेनाभेदोपचार इत्यर्थः। कर्मकरणानामुक्तत्वात् किमिदं पुनरुच्यत इत्यत आह॥ कारणानीति॥ तर्हि 'कर्मसङ्ग्रह' इति कथम्, 'कारणसङ्ग्रह' इति वक्तव्यत्वादित्यत आह॥ कर्मेति॥ कर्मशब्देन तत्कारणानि लक्ष्यन्त इत्यर्थः। यदि पञ्चानां कारणानामयं सङ्ग्रहस्तर्हि कस्य कुत्रान्तर्भाव इत्यत आह॥ अधिष्ठानादीति॥ आदिपदेन दैवपदोक्तमदृष्टं गृह्यते। 'कांस्यपात्र्या पात्र्या भुङ्क्ते देवेन कृतमन्यथा' इत्यादिवत् साधकतमत्वेन विवक्षितत्वात्। "विवक्षातः कारकाणि" भवन्तीति वचनात्। न चाऽऽदिपदेन चेष्टायाः सङ्ग्रहः। तत्र कारकान्तर्भावस्यैवौचित्यात्। 'कर्म' इति पृथग्ग्रहणाच्च। न च कर्म अदृष्टम्। "कर्म चेष्टा" इत्यन्यत्र व्याख्यातत्वात्। "कर्तुरीप्सिततमं कर्म" इति कश्चित्। तदसत्। पञ्चसु कारणेषु तस्यागृहीतत्वात्। श्लोकार्थे श्रुतिसंमतिं चाह॥ तथा हीति॥ 'कर्म' इत्यावर्तनीयम्। तत्रैकं व्यस्तम्। परं समस्तम्। ननु 'ज्ञानं ज्ञेयं' इत्यनेन कथमुक्तशङ्कानिरास इत्यत आह॥ अकर्तृत्वेऽपीति॥ अपराधीनकर्तृत्वाभावेऽपि जीवस्य, न तं प्रति विधिवैयर्थ्यम्। कुतः? 'इति हेतोः' इत्यन्वयः। विधिशब्देन तज्ज्ञानमुपलक्ष्यते। 'इच्छा' इत्यनेन प्रयत्नोऽपि। उक्तकरणैरधिष्ठानादिभिः। अनेन ज्ञानं विधिविषयं, ज्ञेयं च इच्छाप्रयत्नलक्षणमधिष्ठानादिलक्षणं पुरुषार्थलक्षणं च, परिज्ञाता सर्वज्ञ ईश्वरश्च सर्वप्रेरको जीवे सन्निहितोऽस्ति। अतस्तं प्रति कर्मचोदनेत्यर्थः सूचितो भवति। एतदुक्तं भवति। नापराधीनकर्तृत्वं विधिविषयत्वे प्रयोजकम्। येन जीवं प्रति कर्मविधिवैयर्थ्यं स्यात्। तथा सतीश्वरस्यापि विधिविषयत्वापातात्। किं तु यस्य स्वसम्बन्धितया विधिज्ञानं कर्म तत्फलं चोद्दिश्येच्छा, तदनुगुणश्च प्रयत्नः, अधिष्ठानादिसन्निधानं, कर्मसम्बन्धः फलभाक्त्वं चास्ति तं प्रति कर्मविधयः प्रवर्तन्ते। अस्ति चेदं समस्तं परमेश्वरप्रसादायत्तं जीव इति कथं न तं प्रति कर्मविधयः स्युः इति। एतत्सङ्ग्रहवाक्यमुत्तरवाक्यैर्विव्रियते। नन्वीश्वरश्चेत् प्रेरको

जीवशरीरेऽभ्युपगतः तदा तत्प्रसादादेवेच्छाप्रयत्नयोरुत्पादात् किं विधिज्ञानमङ्गीक्रियत इत्यत आह ॥ ईश्वरेति ॥ इच्छति प्रयतते चेति शेषः । अनेन विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्येत्येतद्विवृतं भवति । उक्तकारणैः कर्म भवतीत्युक्तम् । तेनाधिष्ठानादीनां स्वव्यापारे स्वातन्त्र्यं प्राप्तम् । तन्निरासार्थमाह ॥ यदि चेति ॥ ईश्वरेणैव कर्माधिष्ठानादीनि निमित्तमात्राणि कृत्वा कारितं भवति । अत्र णिचं प्रयुञ्जानस्य स्वातन्त्र्यमिति वक्ष्यमाणोऽभिप्रायः । कर्मद्वारा पुरुषार्थो भवतीति पुरुषार्थसाधने कर्मणां प्राधान्यं प्राप्तम् । अत आह ॥ फलं चेति ॥ ईश्वरेणैवेति वर्तते । यद्वा 'यदि च' इत्यादिना वाक्यद्वयेन विधिविषयतासिद्धये कर्मफलसम्बन्धस्य काकतालीयता निराक्रियते । इदं च नेश्वरमुक्तजडेषु विध्यविषयेष्वस्ति, किं तु संसारिष्वेवेति भवति प्रयोजकम् । एवमेकं गीतोक्तं कारणमुक्त्वा भाष्यकारः कारणान्तरं चाह ॥ वस्तुत इति ॥ वस्तुतः परमार्थतः । आभिमानिकमहङ्कारकारितं भ्रान्तिप्रतीतम् । 'तस्य जीवस्यैव' इत्यवधारणेनास्य जीवं प्रति विधिप्रवृत्तौ प्रयोजकत्वं समर्थयते । परमेश्वरकृतासु क्रियासु स्वस्य स्वातन्त्र्यं मन्यमानस्यापराधीनो विधिबन्धलक्षणो दण्ड इति भावः । प्रकारान्तरमाह ॥ स्वातन्त्र्यं चेति ॥ तस्येति वर्तते । स्यादिदं विधिप्रवृत्तिवैयर्थ्यं[1] यदि जीवस्य क्रियास्वातन्त्र्यलक्षणं कर्तृत्वं सर्वथा न स्यात् । न चैवम् । ईश्वरायत्तस्य तस्याङ्गीकारात् । अपराधीनापेक्षया तदभावोक्तेः । न चैवं जडतौल्यमित्याह ॥ जडमपेक्ष्येति ॥ अधिकमिति शेषः । जडं हि तदा परकृतेन नोदनादिना क्रियावद्भवति । न त्वागन्तुककारणमन्तरेण स्वेच्छया । जीवस्त्वनादिसिद्धया परमेश्वरप्रसादायत्तया सत्तातुल्यया क्रियाशक्त्या कर्तेति युक्तस्तं प्रति कर्मविधिरिति ।

नन्वेतत् सर्वं कुतः प्रमाणात् प्रतिपत्तव्यमित्यत आह ॥ सर्वं चेति ॥ अनुभवेनोक्तप्रमाणैश्च 'विधिज्ञाने सतीच्छोत्पत्तिः' इत्यादिकमनु-

1. क. प्रवृत्तिविधिवैयर्थ्यं

भवसिद्धम्। 'ईश्वरप्रसादात्' इत्यादिकं तु "यथा नियुक्तोऽस्मि" इत्याद्युदाहृतागमसिद्धम्। पृथक् पुनः ॥ १८॥

भ० गी०—

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः।
प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ॥१९॥

भा०—

पुनः साधनप्रथनाय गुणभेदानाह ॥ ज्ञानमित्यादिना ॥ गुणसंख्याने, गुणगणनप्रकरणे ॥ १९ ॥

प्र० दी०—

"ज्ञानं कर्म" इत्यादेः प्रकृतोपयोगाप्रतीतेः तं दर्शयन्नाह ॥ पुनरिति ॥ मोक्षसाधनप्रपञ्चनात् प्रागपि गुणभेदानामुक्तत्वात् 'पुनः' इत्युक्तम्। गुणसङ्ख्यानशब्देन कापिलं शास्त्रमुच्यत इति भावेनाऽह ॥ गुणेति ॥ तच्च वैदिकमभिप्रेतम् ॥ १९ ॥

भ० गी०—

सर्वभूतेषु येनैकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्
॥ २० ॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥२१॥

यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम्।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

नियतं सङ्गरहितमरागद्वेषतः कृतम्।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥
मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥
रागी कर्मफलप्रेप्सुः लुब्धो हिंसात्मकोऽशुचिः।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥२७॥

भा०—

एकं भावं, विष्णुम् ॥ २०-२७ ॥

प्र० दी०—

"एकं भावं" इति सामान्येनोक्तम्। कोऽसौ एको भावः इत्याकाङ्क्षायामाह ॥ एकमिति ॥२०-२७॥

भ० गी०—

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥२८॥
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९ ॥
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥

भा०—

परकृतदोषं दीर्घकालकृतमप्यनुचितं यः सूचयति स दीर्घसूत्री।

"परेण यः कृतो दोषः दीर्घकालकृतोऽपि वा।
यस्तस्य सूचको दोषाद्दीर्घसूत्री च उच्यते ॥ २८-३० ॥

प्र० दी०—

दीर्घसूत्रित्वं कथं तामसत्वहेतुरित्यतः सप्रमाणकं व्याचष्टे ॥ परेति ॥ दीर्घकालकृतं चिरातीतकालकृतम्। अनुचितं वचनायोग्यम्। परोपद्रवहेतुत्वात् दोषात् मर्त्यादेः ॥ २८-३० ॥

भ० गी०—

यया धर्ममधर्मं च कार्यं चाकार्यमेव च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥३१

अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥३२

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥३४॥

यया स्वप्नं भयं शोकं विषादं मदमेव च।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ राजसी ॥ ३५

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥३६

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥३७॥

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥३८॥

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्राऽऽलस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥३९

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात् त्रिभिर्गुणैः ॥४०

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥४२॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥४३॥

कृषिगोरक्षवाणिज्यं वैश्यं कर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥४५॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥४७॥

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥

भा०—

यथार्थत्वनियमाभावे राजस्याः। अन्यथा तामस्याः भेदाभावात् ॥ ३१-४८ ॥

प्र० दी०—

"यया धर्ममधर्मं च" इति राजस्याः बुद्धेः धर्मादिविषयाया अयथार्थज्ञानहेतुत्वमुच्यते इत्यन्यथाप्रतीतिनिरासार्थमाह ॥ यथार्थत्वेति ॥ "अयथावत् प्रजानाति" इत्यस्य यथार्थज्ञानजननियमाभावे तात्पर्यमित्यर्थः किं न स्यादित्यत आह ॥ अन्यथेति ॥ 'राजस्याः' इति षष्ठ्यन्तमनुवर्तते । तामस्याः' इति पञ्चमी । भेदाभावात्, भेदाभावप्रसङ्गात् ॥ ३१-४८ ॥

भ० गी०—

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥४९॥

भा०—

नैष्कर्म्यसिद्धिं नैष्कर्म्यफलां योगसिद्धिम् ॥ ४९ ॥

प्र० दी०—

नैष्कर्म्यसिद्धिं मोक्षमिति केचित् । तदसत् । तदनन्तरं मां

विशत इति वाक्यशेषविरोधादिति भावेनान्यथा व्याचष्टे ॥ नैष्कर्म्यमिति ॥ नैष्कर्म्यार्था सिद्धिः नैष्कर्म्यसिद्धिः । सा च योगस्येत्यर्थः ॥४९॥

भ० गी०—

सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ।
समासेन तु कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५०॥

बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥

भा०—

यथा, येनोपायेन सिद्धिं प्राप्तो ब्रह्माऽऽप्नोति तथा निबोध । या सिद्धिर्ज्ञानस्य परा निष्ठा ॥ ५०-५२ ॥

प्र० दी०—

"सिद्धिं प्राप्तः" इति योगसिद्धिप्राप्त्यनन्तरं ब्रह्मप्राप्तावुपायकथनं प्रतिज्ञायत इत्यन्यथाप्रतीतिनिरासार्थं व्याचष्टे ॥ यथेति ॥ "ब्रह्माऽऽप्नोति" इत्यनुवादमात्रम् । तथा तमुपायम् । प्रतीत एवार्थः किं न स्यादिति चेन्न । सिद्धेः ज्ञाननिष्ठाऽऽत्मकत्वेनाभिधानात् । ज्ञानस्य च ब्रह्मप्राप्तावनपेक्षत्वादिति भावेन 'निष्ठा' इत्येतद्व्याचष्टे ॥ येति ॥५०-५२॥

भ० गी०—

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥५५॥

भा०—

ब्रह्मभूयाय कल्पते । ब्रह्मणि भावो ब्रह्मभूयं ब्रह्मणि स्थितिः सर्वदा तन्मनस्कतयेत्यर्थः ॥ ५३-५५ ॥

प्र० दी०—

'ब्रह्मभूयाय' ब्रह्मत्वाय इति प्रतीतिनिरासार्थं व्याचष्टे ॥ ब्रह्मेति ॥ इत्यर्थ इति शेषः । भावो न जन्मादीत्याशयेन विवृणोति ॥ ब्रह्मणीति ॥ इयमपि न मुक्तिः । 'ब्रह्मभूत' इति पुनर्भक्त्यादिलाभश्रवणादिति भावेनाऽह ॥ सर्वदेति ॥ ५३-५५ ॥

भ० गी०—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥५८॥

यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥५९

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत्
॥ ६० ॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥६१॥

भा०—

पुनरन्तरङ्गसाधनान्युक्त्वोपसंहरति ॥ सर्वकर्माणीत्यादिना ॥ ५६-६१ ॥

प्र० दी०—

उत्तरग्रन्थस्य सङ्गतिं सूचयन् तात्पर्यमाह ॥ पुनरिति ॥ उपसंहरति ॥ शास्त्रमिति शेषः ॥ ५६-६१ ॥

भ० गी०—

तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि
शाश्वतम् ॥ ६२ ॥

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्
॥ ६४ ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५

भा०—

परोक्षवचनं तु द्रोणं प्रति भीमवचनात् ॥ ६२-६५ ॥

प्र० दी०—

"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति"। "तमेव शरणं गच्छ" "तत्प्रसादात्" इत्यादिरूपात्परोक्षवचनात् कृष्णस्यानीश्वरत्वं प्रतीयते। तन्निराकर्तुमाह॥ परोक्षेति॥ निश्चितार्थत्वाभिप्रायेणान्यथा सिद्धमिति शेषः ॥ ६२-६५ ॥

भ० गी०—

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः
॥ ६६ ॥

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति
॥ ६७ ॥

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥६८॥

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥६९॥

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥७०॥

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभान् लोकान् प्राप्नुयात्
पुण्यकर्मणाम् ॥ ७१ ॥

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनञ्जय ॥ ७२ ॥

अर्जुन उवाच—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥

सञ्जय उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात् साक्षात्कथयतः स्वयम्
॥ ७५ ॥

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महाराजन्[1] हृष्यामि च पुनः पुनः
॥ ७७ ॥

---

1. अ. महान् राजन्

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नाम अष्टादशोऽध्यायः ॥ १८ ॥

भा० —

धर्मत्यागः फलत्यागः । कथमन्यथा युद्धविधिः ? "यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते" इति चोक्तम् ॥ ६६-७८ ॥

[1] पूर्णादोषमहाविष्णोः गीतामाश्रित्य लेशतः ।
निरूपणं कृतं तेन प्रीयतां मे सदा विभुः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये अष्टादशोऽध्यायः ॥ १८ ॥

प्र० दी० —

"सर्वधर्मान् परित्यज्य" इति वर्णाश्रमविहितानामपि सर्वधर्माणां परित्यागो विधीयत इत्यन्यथाप्रतीतिनिरासार्थमाह ॥ धर्मेति ॥ प्रतीत एवार्थः किं न स्यादित्यत आह ॥ कथमिति ॥ अस्मिन् शास्त्रे क्रियत इति शेषः । अशाब्दोऽयमर्थ इति चेन्न, धर्मशब्दस्य स्वकार्यफलोपलक्षणत्वात् । एवमेव भगवता व्याख्यातत्वाच्चेत्याह ॥ यस्त्विति ॥ ६६-७८ ॥

---

1. अ. "पूर्णादोष" इत्यादितः पूर्वं—

"यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलम्
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ॥ "

इत्यधिकः पाठः ।

प्र० दी०—

इदानीं समापितभाष्यो भगवानाचार्यो भाष्यनिर्माणस्य फलं भगवत्प्रीतिमेवाऽऽशास्ते ॥ पूर्णेति ॥ एतत् 'गीतां' इत्यनेन 'निरूपणं' इत्यनेन च सम्बध्यते। 'तेन' इति श्रवणात् यदिति लभ्यते।

करतलकलितामलकमिव प्रभुणा येनेदमवगतं विश्वम्।
स जयति जनकसुतायाः कान्तः श्रीरघुनन्दनो देवः ॥ १ ॥

नमामि व्यासदासस्य पूर्णबुद्धेः पदाम्बुजे।
नतामरशिरोरत्नराजिनीराजिते सदा ॥ २ ॥

अक्षोभ्यतीर्थगुरुणा शुकवच्छिक्षितस्य मे।
वचोभिरमृतप्रायैः प्रीयतां सततं बुधाः ॥ ३ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां अष्टादशोऽध्यायः समाप्तः ॥ १८ ॥

॥ श्रीकृष्णार्पणमस्तु ॥



## गीताभाष्यप्रमेयदीपिकोदाहृत

# प्रमाणसूची





*

## कठोपनिषत्



## गारुडपुराणम्



## गीताकल्पः

## गौतमखिलम्



## जाबालि खिलश्रुतिः



## तैत्तिरीयोपनिषत्



## नारायणगोपालकल्पः



## नारदीयम्

नारायणाष्टाक्षरकल्पः

## पाद्मपुराणम्



## पिप्पलादशाखा



## पैङ्गिखिलम्



## पञ्चरात्रस्मृतिः



## बाष्कलशाखा



## बृहदारण्यकम्



## ब्रह्मवैवर्तपुराणम्

## ब्रह्मसूत्राणि



## ब्राह्मपुराणम्

## भगवद्गीता



## भागवतम्

## महाकौर्मपुराणम्

## महाभारतम्

## मानवम्

## मुण्डकोपनिषत्



## यजुर्वेदः



## वराहपुराणम्



## वामनपुराणम्



## विष्णुपुराणम्



## व्यासयोगः



## व्यासस्मृतिः

## शार्कराक्षश्रुतिः



## स्कान्दपुराणम्



## सनत्सुजाते (महाभारतम्)



## सामवेदे

यास्कश्रुतिः



वसिष्ठशाखा



सौकरायणश्रुतिः

## अनिर्दिष्टाकराः

*

# श्रीमद्भगवद्गीता श्लोकसूची

*

# शुद्धाशुद्धपत्रिका

| पृष्ठम् पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|
| ५- ७ | किमते | किमेत |
| १०- ४ | एवासुन्कुसुनोः | अत एव तोसुन्कसुनोः |
| ४१- ३ | गुणमय्या गुणो | गुणमय्याऽगुणो |
| ६० १२ | मेवास्योत्कर्षा | मेवान्योत्कर्षा |
| ६५- ५ | नानन्दकत्वादि | नानन्दत्वादि |
| ७०- ४ | उपादेय वाचको | उपायवाचको |
| ७७ ११ | काम्यकर्मणां फलं ज्ञानिनां भवतीति | काम्यकर्मिणां फलं ज्ञानिनां न भवतीति |
| ७७ १५ | विज्ञानतः | विजानतः |
| ८१ १४ | सेवादिवाचकं | सेवादियाचकं |
| ८७ ३ | बृहत्वे | बहुत्वे |
| ८९- ६ | किन्तु | किन्न |
| ९६- ४ | कौऽसौ | कासौ |
| ९८ २३ | ब्रह्मणे | ब्रह्मणो |
| ९९ १२ | स योगः कर्मज्ञानसाधनम् | सयोगकर्म ज्ञानसाधनम् |
| १०३ १६ | अनुष्ठास्यैक्यविध्य | अनुष्ठानस्यैकविध्य |
| १०७-२१ | अनुपपर्त्ति समाधानं च | अनुपपत्तिसमाधानं च |
| १२७ २२ | तद्दर्शनादिति | तददर्शनादिति |
| १३६ १६ | ज्ञानृच्छति | ज्ञान्यृच्छति |
| १४० १२ | कर्मण्येवाधिकृत | कर्मण्यप्यधिकृत |
| १४१ २६ | ज्ञाननिष्ठा भवति | ज्ञाननिष्ठा अपीति |
| १५६ २५ | हुतमादित्यादि | हुतमित्यादि |
| १५७ · २ | तदभिमति पूर्वकत्वे न | तदमतिपूर्वकत्वेन |
| १६४- ६ | व्यावृत्यते | व्यावर्त्यते |

| पृष्ठम् पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|
| १६६–१२ | द्युक्तविरोध | द्युक्तिविरोध |
| १६६-१६ | योग्यतया | योग्यताया |
| १६८-२२ | स्युरज्ञान | स्युरज्ञानाम् |
| १६९–२३ | ज्ञानार्थः। वेत्यस्य | ज्ञानार्थोवेत्यस्य |
| १७० १२ | ननुचात्र | न च सर्वत्र |
| १८८- ३ | परम्पराऽत्रोच्यते | परम्पराऽत्रोच्यते। किन्तु तेषामनुष्ठानमप्युपलक्ष्यते। तच्चेतोऽपि |
| १९७-२२ | वक्ष्यते। वैलक्ष्यण्या | वक्ष्यते। क्रियायां वैलक्षण्या |
| १९७ २३ | तनुर्विद्याक्रिया कृतिः | "तनुर्विद्याक्रियाऽऽकृतिः" |
| २१० १४ | तपसो होमः तपश्चरण | तपसो होमः कथमित्यत आह। इदमिति। तपश्चरण |
| २२० · ९ | कर्माधिकृतै | कर्मानधिकृतै |
| २२५ ७ | मुक्तिरिति | मुनिरिति |
| २२८ ४ | संन्यासस्यसंन्यासीत्यपि | सन्न्यास्यसन्न्यासीत्यपि |
| २३०-१९ | च परोक्ष | चापरोक्ष |
| २३४· १ | एवं इहैव | एवं तर्हि इहैव |
| २३४- २ | वादेन ग्राह्य | वादे ग्राह्य |
| २३६- ५ | भूतशब्स्य | भूतशब्दस्य |
| २३६ १८ | चैतद्भगवती | चैतद्भवती |
| २३७- १ | एव यतात्मानः | एवायतात्मानः |
| २३७ २३ | नियतमन इत्यर्थः | नियतमनस इत्यर्थः |
| २३९ २ | ध्यानिनां | ध्यायिनां |
| २४५ ५ | सम्यगनुषङ्ग | सम्यगननुषङ्ग |
| २४६ · ३ | कृतं तेत | कृतं तत् |
| २५१ २१ | यदेकं एकं | यदेक एकं |
| २५२ - ८ | रन्तः करणादि, सर्वं | रन्तःकरणादिः सर्वं |
| २५४ - ४ | द्वेष्येऽवासित | द्वेष्योऽवासित |

| पृष्ठम् पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|
| २६६-१० | शक्त्या स्यात् | शक्या स्यात् |
| २३७- २ | तन्निवृत्या | तन्निवर्त्या |
| २७३- ५ | शक्यैश्वर्य | शक्त्यैश्वर्य |
| २७७-२० | त्युपलब्धः | त्युपलब्धुः |
| २८१-२७ | च भेदोक्तिः | चाभेदोक्तिः |
| २८३- २ | आहच—"सूक्ष्माशनम्" प्रवि- | आह च सूक्ष्माशनम्—"प्रवि |
| २८३- ४ | च्छरीरादात्मनः | च्छारीरादात्मनः |
| २८४- ५ | आह॥ स चेति॥ कुतो- नेत्यत आह॥ आहचेति॥ | आह॥ न चेति॥ कुतो नेत्यत आह॥ स्थूलेति॥ श्रुत्यादिषु स्थूलस्य जीवभोग्यस्य विषयस्याभोगोक्तेः सूक्ष्मभोगस्य चाङ्गीकारादिति भावः। सूक्ष्माशने प्रमिते भवेदियं व्यवस्था। तदेव कुत इत्यत आह॥ आहचेति॥ |
| २८४- ७ | च्छरीरादात्मनः | च्छारीरादात्मनः |
| २८४-१३ | स्वप्नोऽन्नमिति | स्वपो नन्निति |
| २८४-१३ | स्वप्न सुषुप्तश्च | स्वप्नः सुषुप्तश्च |
| २८६- २ | ज्ञायत | ज्ञायसे |
| २८८-१२ | तच्छक्त्यन्तांश | तच्छक्त्यनन्तांश |
| २८८-२१ | स्वगतं | स्वगतिं |
| २९०- ९ | चित्स्थम् | चित्तस्थम् |
| २९०-१६ | नात्ययन्नि | नात्यायन्नि |
| २९१- ७ | विपर्ययस्य | विपर्ययस्याधर्म |
| २९१- ९ | याथात्म्यज्ञानस्य | याथात्म्याज्ञानस्य |
| २९१-१८ | विषयं मुक्ति | विषयं। मुक्ति |
| २९१-१८ | श्रयणप्रवृत्त्या | श्रयणं प्रवृत्या |

| पृष्ठम् पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|
| २९२- ६ | नान्यत्र भक्तिः—स एक-भक्तिरुच्यते" | नान्यत्र एकभक्तिः स उच्यते" |
| ३०० २३ | वैकल्पं | वैकल्यं |
| ३०२-२० | विशेषण | विशेषेण |
| ३०७- ९ | नैश्रेयसं | निःश्रेयसे |
| ३१७- ३ | पदं "पद्गतौ" | पदं स्वरूपं "पदगतौ" |
| ३१७-१२ | प्रयोगदर्शनम्॥ ११॥ | प्रयोगप्रदर्शनम्॥ तद्विष्णोरिति॥ |
| ३२१- ९ | पर्यन्तमहाविष्णो | पर्यन्तमहर्विष्णो |
| ३२१ २१ | तथा द्विपरा | तथाच द्विपरा - |
| ३२३ २४ | अग्निर्ज्योति | अग्निर्ज्योतिर्धूमानां |
| ३२४ १७ | सिषुवा | विषुवा |
| ३२९ १३ | शब्देन परोक्ष | शब्देनापरोक्ष |
| ३३१ ३० | पादार्थान्यु | पादनार्थान्यु |
| ३३३- २ | परमं तमाप | परमन्तमाप" |
| ३३३ २० | सहितेत्यत्र | सहितेऽत्र |
| ३३४-११ | न कर्मणो | न कर्मणा |
| ३३७-१० | यस्मिन् तदव्यक्तम् | यस्मिन् तत्। अव्यक्तं तदभि |
| ३३८ ८ | पुरुषार्थं आमु | पुरुषार्थः आमु |
| ३३८ २० | शपनास | शयनास |
| ३४०- १ | भावो भाव कारणं | "भावोहि भवकारणम्" |
| ३४०- ३ | त्वे विशेषः | त्वेऽविशेषः |
| ३४० ५ | विवक्षुरत्य | विविक्षुरत्य |
| ३४१- ४ | प्रार्षद | पार्षद |
| ३४१ १५ | भावस्य | भवस्य |
| ३४५ १३ | संसारकाले | संहारकाले |
| ३४६·२० | इत्युक्तमि | इत्ययुक्तमि |
| ३४९-११ | माह विधि | माहाविधि |

